# शब्दाप्रामाण्यवाद:

अथ शब्दो निरूप्यते । प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्य: शब्द: प्रमाणम् । करणञ्च तत् यस्मिन् सति क्रिया भवत्येव ।

न च शब्दे सति प्रमा भवत्येवेति नायं शब्द: प्रामणम् । न च शब्दो न प्रमाणमिति वाक्यस्य प्रामाण्याप्रमाण्ययोर्व्याघात: , अस्याप्रामाण्येऽपि एतदुत्थाप्यमानाविसंवादादिति चेत् न, आकाङ्क्षादिमतः पदार्थस्मरणादिव्यापारवत: प्रमाणत्वेन तथाभूतात् प्रमोत्पत्तेरावश्यकत्वात् अतथाभूतत्वे च फलाजनकत्वस्य करणान्तरसाम्यात् । तथापि शब्दो न प्रमाणान्तरं पदार्थसंसर्गस्यानुमानादेव सिद्धे: । तथापि गामाभ्याज दण्डेति पदानि वैदिकपदानि वा तात्पर्य्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वात् घटमानयेतिवत् । योग्यतासत्तिमत्त्वे सति संसृष्टार्थपरत्वात् तत्परसन्निमत्त्वाद्वेति न हेतु:, संसृष्टोहि योऽर्थस्तत्परत्वं तत्परसन्निधिमत्त्वं वा असिद्धं संसर्गस्य प्रागप्रतीते:। संसृष्टत्वप्रकारकप्रतीतिपरत्वं तत्प्रकारकप्रतीतिपरसन्निधिमत्त्वं वा अनाप्तोक्ते निराकाङ्क्षे च व्यभिचारि । संसर्गस्य बहुप्रकारकत्वेऽपि नानाभिमतसंसर्गसिद्धिस्तस्य तात्पर्य्याविषयत्वात् । अन्यथा शब्दादप्यभिमतान्वयबोधो न स्यात् । अत एव विशेषण-विशेष्यभाववदर्थकानि तद्बोधपूर्वकाणि वेति न साध्यम् ।

यत्तु स्मारितार्थसंसर्गवन्तोति साध्यं, मत्वर्थश्च लिङ्गतया ज्ञापकत्वं । न चान्योन्याश्रय:, पूर्वपूर्वानुमितिहेतुत्वेन अनादित्वात् । तन्न । ज्ञापकत्वमात्रेणार्थासिद्धे: । प्रमापकत्वे तेनैव व्यभिचारात् । ज्ञानावच्छेदकतया च संसर्गसिद्धि: ज्ञानज्ञानस्य तद्विषयविषयकत्वनियमात् ।

संसर्गे च सम्बन्धिन एव विशेषकत्वात् । पक्षधर्मताबलात् व्यपकत्वेनागृहीतस्यापि संसर्गविशेषस्य सिद्धि: । अथैवं भ्रान्तिज्ञानमपि भ्रम: स्यात् । न चेष्टापत्ति:., ईश्वरस्यापि भ्रान्तत्वापत्ते: । इदं रजतमिति भ्रमादिव शुक्तौ रजतज्ञानवानयमिति भ्रमस्य ज्ञानात् भ्रान्तिज्ञप्रवृत्त्यापत्तेश्च । यत्तु भ्रमविषयकत्वेन न प्रमत्वं भ्रमविषयाणां सिद्ध्य्यसिद्धिपराहतत्वात् इति, तच्च वक्ष्याम: । मैवं, असद्विषयकत्वेन न भ्रमत्वं भ्रमविषयाणां सत्त्वात् किन्तु व्यधिकरणप्रकारकतत्वेन । न च भ्रमस्य ज्ञाने व्यधिकरणं प्रकार:, रजतत्वप्रकारकत्व भ्रमेऽपि सत्त्वात् अन्यथा भआन्त्युच्छेद: प्रमाणाभावात् । ननु प्रकारकवाक्ये व्यभिचार: विशेषदर्शनेन तच्च संसर्गज्ञानाभावात् । न च संसर्गमप्रतीत्य वाक्यरचना न सम्भवतीत्याहार्य्यं तस्य संसर्गज्ञानं सम्भवतीति वाच्यम् । तावत्पदज्ञानादेव एकस्येव वाक्यरचनोपपत्ते: । अन्यच्चापि तस्यैव तन्त्रत्वादिति चेत् , न, एतद्वाक्यमेतस्य पदार्थसंसर्गं बोधयिष्यतीत्याशयेन वाक्यप्रयोगात् तस्यापि संसर्गज्ञानात् योग्यताविरहाच्च । अत एव विसम्बादिवाक्ये एकवदुच्चरिते न व्यभिचार: । शब्दात् संसर्गप्रत्ययस्तु योग्यताभ्रमात् । अथ संसर्गज्ञानं विना एकस्यान्यस्य वा सम्बादिवाक्ये भ्रान्तप्रकारकवाक्ये च व्यभिचार: कथं वा तच्च संसर्गप्रमा वक्तृज्ञानानुमानासम्भवादिति चेत् न । यदि तच्च संसर्गप्रमा तदा वेदतुल्यतेत्युक्तम् । आकाङ्क्षा - योग्यतासत्तिश्च ज्ञातोपयुज्यते, अन्यथा शाब्दभ्रमानुपपत्तेरिति । उच्यते । अर्थज्ञानं प्रवर्त्तकं न तु तज्ज्ञानज्ञानं गौरवात् व्यभिचाराच्च, अतो रजतविषयकमिति चेत् सत्यं, न तु रजतत्वप्रकारकं प्रवर्त्तकञ्च तथा, तदुभयसङ्करापत्तिश्च । एतेन लक्षणाद्यनुरोधात्तात्पर्य्यग्रहो वाक्यर्थधीहेतु: तात्पर्यञ्च पदार्थसंसर्गविशेषप्रतीत्युद्धेश्यकत्वं, तथाच तद्ग्राहकानुमानादेव तात्पर्यज्ञानावच्छेदकतया संसर्गसिद्धिरित्यपास्तम् । किञ्च व्यापकतावच्छेदकप्रकारिकानुमितिरत: स्मारिपदार्थसंसर्गज्ञानपूर्वकाणीति तस्मात् प्रवर्त्तकं ज्ञानं शब्दादेव। अत एव प्रवृत्त्यर्थमनुवादकता शब्दस्येत्यपास्तं । शाब्दानुमित्योर्भिन्नप्रकारकत्वात् एकविषयत्वाभावेन स्तात्पर्यविषयमिथःसंसर्गवन्त: आकाङ्क्षादिमत्पदस्मारितत्वात् योग्यतासत्तिमत्त्वे सति ससंर्गपरपदस्मारितत्वाद्वा, अनाप्तोक्ते योग्यताविरहात् न व्यभिचार:, तच्च बाधकसत्त्वात्, तज्जन्यज्ञानस्य भ्रमत्वात् एकाकारवाक्यस्यापि बाधकसत्त्वासत्त्वाभ्यां योग्यायोग्यत्वात् । अथ प्रतिपत्तुर्जिज्ञासां प्रति योग्यता सा च श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभावरूपाकाङ्का बाधकप्रमाविरहा योग्यता अव्यवहितसंसर्गप्रतियोगिज्ञानमासत्ति: ताश्च स्वरूपसत्यो हेतवो । न तु ज्ञाता: गौरवात् तद्बोधं विनाऽन्वयानुभवे विलम्बाभावात् संसर्गनिरूप्यत्वेन प्रथमं दुरवधारणत्वाच्चेति न तानि लिङ्गविशेषणानेति चेत्, न, योग्यतादिशून्यत्वेऽपि तदभिमानेन संसर्गप्रत्ययादन्यथा शाब्दभासोच्छेदप्रसङ्ग: । राजा पुत्रमाकाङ्क्षति पुरुषं वेति संशये विपर्यये च वाक्यार्थधीप्रतिबन्धाच्च, योग्यतायाश्च संशयसाधारणं ज्ञानमात्रं हेतु:, स्व- परबाधकप्रमाविरह: क्वचित् निश्चीयतेऽपि यथेह घटो नस्तीत्यच्च स्वयोग्यानुपलब्धा घटाभावनिश्चयेनान्यसस्यापि घटप्रमाविरहो निश्चीयते । क्वचिद्बाधकप्रमामात्रविरहसंशयेऽप्यन्वयबोध: बाधसंशयस्यादूषणत्वात् । किञ्च तवापि योग्यतादिकं प्रमाण्ये प्रयोजकं आप्तोक्तत्वस्य तथात्वे गौरवात् अनाप्तोऽक्तेऽपि संवादेन प्रमाण्याच्च । एवञ्च ज्ञायमानकरणे प्रमाण्यप्रयोजनकतया ज्ञानमावश्यकमिति तासां ज्ञानं हेतु:, तच्च समभिव्याहारविशेषादिनेति । मैवं । यत्र विमलं जलं इत्यश्रुत्वैव नद्या: कच्छे महिषश्चरतीति श्रृणोति तत्राकाङ्कादिकमस्ति । न च नदौ-कच्छयो: संसर्ग इति, व्यभिचारात् । अत एव तन्मात्रं प्रयोजकं प्रमाण्ये । अथ यावात्समभिव्याहमतेत्यपि लिङ्गविशेषणं कतिपयपदस्मारिणस्तु संसर्गप्रत्ययोलिङ्गाभिमानादिति चेत् । न । तत्सन्देहेऽपि वाक्यार्थावगमात् । तत्र संसर्गभ्रान्तिरिति चेत् न । अन्यकारणाभावेन पदमेव भ्रान्तिजनकं तथाचादुष्टं सत्तदेवाभ्राॅन्त जनयत् केन वारणी#ायम् । असंसर्गाग्रहस्तचेति चेत् । न । संसर्गे बाधकाभावात् । अथाप्तोक्तत्वं लिङ्गविशेषणं तदेव वा लिङ्गम् । न च नदी- कच्छयो: संसर्गे आप्तोक्तत्वं, आप्तोक्तत्वञ्च प्रमाण्ये तन्त्रमिति तद्वत्तया ज्ञायमानस्य हेतुत्वेन तत्र ज्ञानमावशयकं व्याप्तिमत्तया ज्ञातस्येव लिङ्गस्य, तदवगमश्च लोके भ्रमाद्यमूलकतया महाजनपरिग्रहेण वेदे स्मृतौ चेति चेत् । न । यत्र कुत्रचिदाप्तत्वमनाप्तस्यापि सर्वचाप्तमप्रमितं, भ्रान्ते: पुरुषधर्मत्वात् प्रकृतवाक्यार्थयथार्थज्ञानवत्त्वञ्चाप्तत्वं प्रथमं दुर्ग्रहं, भ्रमाद्यमूलकत्वस्य प्रवृत्तिसंवादादेश्च तद्ग्राहस्याज्ञानात् प्रवृत्तिश्च सन्देहादपि । किञ्च पकृतसंसर्गे अयमाभ्रान्तो यथार्थज्ञानवान्वेति संसर्गमप्रतीत्य ज्ञातुमशक्यं वाक्यार्थस्यापूर्वत्वात् । वयन्तु बूम: बाधकप्रमाणाभावो योग्यता सा च न लिङ्गविशेषणं बाधकप्रमाणमात्रविरहस्य सर्वत्र निश्चातुमशक्यत्वात् , तत्संशयेऽपि शब्दादन्वयबोधाच्च, शब्दप्रामाण्ये तु योग्यताया: संशय-निश्चयसाधारणं ज्ञानमात्रं प्रयोजकमिति शब्द: प्रमाणमिति ।

जरन्मीमांसकास्तु लोके वक्तृज्ञानानुमानात्तदुपजीवसंसर्गानुमानाद्वा वाक्यर्थसिद्धो#ै शब्दस्यानुवादकत्वं वेदे तु तदभावात् स्वातन्त्र#ेण प्रामाण्यमिति वदन्ति । तन्न । वेदे क्तृप्तसामग्री#ातो लोकेऽपि संसर्गप्रत्ययादन्यथानुवादकतापि न स्यात् लिङ्गस्य पूर्वत्वेऽपि व्याप्तिस्मृतिविलम्बेन तद्विलम्बात् । अनाप्तोक्तौ व्यभिचारात् वेदतुल्यापि सामग्रौ न निश्चायिकेति चेत् । न । चक्षुरादेस्तथात्वेन तच्छङ्कायामपि प्रमापकत्वात् । ज्ञायमानं करणं सन्देहे न निश्चायकं लिङ्गवदिति चेत् । न । संशयो हि न वाक्ये तस्य निश्चयात्, न तज्जनयज्ञानप्रमाण्ये तस्य तदुत्तरकालीनत्वात् , नाप्तोक्ततत्वे तन्निश्चयस्यानङ्गत्व् । ननु लोके आप्तोक्तत्वसन्देहे वाक्यार्थधीर्नेति तन्निश्चयोहेतुः तथा च वाक्यार्तगोचरयथार्थज्ञानअन्यत्वग्राहकात् । तदुपजीविनोऽनुमानात् वाक्यर्थधीरिति चेत् । न । वेदेतद्रहितस्यापि सामश्र्यावधारणात् तदनिश्चयेऽपि वेदानुकारेण पठमानमन्वादिवाक्येऽपौरुषेयत्वाभिमानि नोगौडमीमांसकस्यार्थनिश्चयात् । न चासौ भ्रान्तिः, बाधकाभावात् पौरुषेयत्वनिश्चयदशायामपि तस्य तथात्वात् ।

न चासंसर्गाग्रहमात्रं तत् अर्थस्य तथाभावेऽपि असंसर्गाहत्वे संसर्गोच्छेदापत्तेः । न चाप्तोक्ततत्वन्निश्चयरूपकारणाबाधात् संसर्गज्ञानबाधः, व्यभिचारेण हेतुतायामेव बाधात् लौकिकत्वेन ज्ञाते तदङ्गमिति चेत् । न । मानाभावात् वाक्यार्थस्यापूर्वत्वेन लिङ्गाभावेन तद्ग्रहासम्भात् । यदि चापौरुषेयत्वनिश्चये सत्येव वेदादर्थप्रत्ययः तदा दोषवत्पुरुषाप्रणीतत्वे सत्याकाङ्क्षादिमत्पदस्मारितत्वेन वेदे पदार्थसंसर्गसिद्धिरस्त्विति वेदेऽप्युनुवादकः स्यात् । तदुक्तं, *व्यस्तपुंदूषणाशङ्कैः स्मारिततत्वात् पदैरमी । अन्विता इति निर्णीते वेदस्यापि न तत् कुतः* । न चैवं शब्दस्य प्रमाणत्वमपि, अनुमानादेव वाक्यर्थप्रमोत्पत्तेरिति ।

प्राभाकरास्तु व्यभिचारिशब्दव्यावृत्तमव्यभिचार्यनुगतप्रमाप्रयोजकमुपेयं यदभावादनाप्तोक्तवाक्यादप्रमा अन्यथा कार्यवैचित्र्यं न स्यात्, तच्च ज्ञातमुपयुज्यते ज्ञामानकरणे ज्ञनोपयोगिव्यभिचारिवैलक्षण्यत्वात् प्रमाहेतुत्वाद्वा व्याप्तिवच्छब्दशक्तिवच्चेति, अन्यथा शब्दाभासोच्छेदप्रसङ्गः । न चाप्तोक्तत्वं तथा, संवादात् प्रमाणे शुकोदीरिते भ्रान्तप्रतारकसंवादिवाक्ये वेदे च तदभावादाप्तोक्तत्वानुमाने व्यभिचारिव्यावृत्तलिङ्गाभावाच्च । भावे वा तद्वत एव शब्दस्य प्रत्यायकत्वात् ।

एतेनाप्रमाहेतुत्वं न भ्रम-पमाद-विप्रलिप्सा -

करणापटवानां परस्परं व्यभिचारात् मिलितस्याव्यापकत्वात् । किन्त्वाप्तोक्ततत्वाभावस्याप्रमाहेतुत्वं तदभावश्चाप्तोक्ततत्वं प्रमाहेतुरित्यपास्तं । आप्तोक्तत्वस्य प्रथमं लिङ्गाभावेन ज्ञातुमशक्यत्वात् । अत एव व्यभिचारशङ्काविरहो हेतुः सा च लोके भ्रमादिमूलेत्याप्तोक्तत्वानुमानादुच्छिद्यते, वेदे च पौरुषेयत्वनिश्चयेनेति निरस्तं । अभिमतवाक्यार्थस्यापूर्वत्वेन साध्याप्रसिद्धेः वेदे सदोषपुरुषाप्रणीतपदस्मारितत्वेन संसर्गसिद्धेरनुवादकतापत्तेश्च । नापि दोषाभावः भ्रान्तप्रतारकवाक्यजन्यज्ञाने प्रत्यक्षेणागृहीतसंवादे तदभावात् । दोषभावस्य हेतुत्वात् तत्र वाक्यं मूकमेव व्यवहारस्तु प्रत्यक्षादिति चेत् । न । अनुभवापलापापात् तद्धेतुत्वे विवादात् वेदेऽप्यनुवादकतापत्तेश्च । किञ्च दोषाभावस्य प्रमाहेतुत्वेऽप्रमायां दोषः कारणं तस्य च प्रत्येकं हेतुत्वे व्यभिचारः मिलितस्य तत्त्वे एकस्मादप्रमा न स्यात् भ्रमादीनां प्रत्येकं दोषत्वेऽननुगमः मिलितस्य तु तत्त्वे एकस्मादप्रमानुदयप्रसङ्गः । तस्मात् लाघवात् यथार्थतात्पर्यकत्वं शाब्दप्रमाप्रयोजकं तच्च यथार्थवाक्यर्थवाक्यर्थप्रतीतिप्रयोजनकत्वं लोक-वेदसाधारणं तदभावादप्रमा स एव दोषः, न हि जात्यैव कश्चिद्दोषः, तद्विघातकत्वाच्च भ्रमादीनां दोषत्वं । अत एव भ्रान्तप्रतारकवांक्यं शुकादिवाक्यञ्च प्रमाणं संवादात् । अत एवान्यघटाभिप्रायेण गेहे घटोऽस्तीत्युक्ते यत्र धटान्तरं दृष्ट्वा तमानयति तत्रान्यपरत्वाच्छब्दो न प्रमाणं व्यवारस्तु प्रत्यक्षादेव यष्टीः प्रवेशयेति च मुख्यार्थबोधे तच्च तात्पर्यं ज्ञातमुपयुज्यते ज्ञायमानकरणे ज्ञानोपयोगिव्यभिचारिवैलक्षण्याद्व्याप्तिवच्छक्तिवच्च, अन्यथा अन्यपरादन्यान्वयबोधोन स्यात् इति शब्दाभासोच्छेदप्रसङ्गः, तदभ्रमाच्च शाब्दभ्रमः । अत एव यष्टीः प्रवेशयेत्यच लक्षणा नानार्थे विनिगमना च तयोस्तात्पर्यग्रहमूलकत्वात् । यदि च यत्र वास्तवं तात्पर्यं तं शाब्दोबोधयति तदा लक्षणानां मुख्यार्थान्वयानुपपत्त्युपयोगो न स्यात् । अत एव पचतीत्युक्तेऽयोक्तेन स्वयं स्मृतेन वा कलायपदेनोपस्थिते कलायं पचतीत्यन्वयबोधो न भवति तात्पर्यानिश्चयात् । न च तात्पर्यग्राहकस्य प्रकरणादेः प्राथम्यादावश्यकत्वाच्च शब्दसहकारिता न तु तात्पर्यग्रहस्येति वाच्यम् । तेषामननुगतत्वेन परस्परव्यभिचारादहेतुत्वात् तात्पर्यग्राहकतात्वननुगतानामपि व्याप्यत्वात् धूमादीनामिव । तच्च तात्पर्य वेदे न्यायगम्यं, यत्र न्यायात् तात्पर्यमवधार्यते स एव वेदार्थः, लोके च न केवलं न्यायानुसारि तात्पर्यं इति न न्यायगम्यं किन्तु पुमभिप्रायनियन्त्रितं, न्यायाविषयेऽपि पुरुषेच्छाविषये प्रतीतिजनकत्वात् पुंवचसां । वक्ता च परकीयवाक्यार्थज्ञानोत्पादनेच्छाया वाक्यमुच्चारयति । सा चेच्छा यदि वक्त्रुर्यथार्थवाक्यार्थज्ञानपूर्विका भवति तदैव परं तदुच्चारणस्य तदैव परं तदुच्चारणस्य पुमभिप्रेतयथार्थवाक्यार्थज्ञानपरत्वं यथार्थज्ञानेच्छाव्याप्यं निर्वहतीति वक्तुर्यथार्थवाक्यार्थज्ञानवत्तामविज्ञाय यथार्थप्रतीतिपरत्वं ज्ञातुं न शक्यत इति प्रथममाप्तवाक्याद्वक्तृज्ञानानुमानपूर्वकमर्थतथात्वमनुसन्धाय यथार्थप्रतीतिपरत्वं ज्ञातुं न शक्यत इति प्रथममाप्तवाक्याद्वक्तृज्ञानानुमानपूर्वकमर्थतथात्वमनुसन्धाय यथार्थतात्पर्यनिश्चयः । अनुमानच्चेदं वाक्यं भ्रमादि-विशिष्टज्ञानयोरन्यतरजन्यं वाक्यत्वादिति । ततो भ्रमादिनिरासे सति परिशेषाद्वाक्यार्थज्ञानानुमानं अयं स्वप्रयुक्तवाक्यार्थयथार्थज्ञानवान् भ्रमाद्यजन्यवाक्यप्रयोक्तुत्वात् अहमिव, न त्वाप्तत्वात् साध्यविशेषात् । तत एते पदार्था यथोचितसंसर्गवन्तः यथार्थज्ञानविषयत्वात् आप्तोक्तपदस्मारितत्वाद्वा मंदुक्तपदार्थवदिति । ननु वक्तुज्ज्ञानविशेषोऽनुमेयः ज्ञाने चार्थ एव विशेषः न त्वर्थाधीनोऽन्यः अर्थेनैव विशेषः इत्यौपचारिको तृतीया तथाच वाक्यार्थज्ञानविशेषोऽनुमेयः तस्य चाप्रसिद्ध्या न व्याप्तिग्रहः । अत एवास्मिन् वाक्यर्थे अयमभ्रान्त आप्तो वेति ज्ञातुमशक्यमिति शब्द एव तमर्यं बोधयेदिति चेत्, न, तात्पर्यावधारणार्थं त्वयाप्यशाब्दा एव संसर्गविशेषप्रतीतेरवश्याभ्युपेयत्वात् अन्यथा क्व तात्पर्यनिरूपणं । अत एव आप्तोत्कत्वभ्रमाद्यन्यत्वनिरूपणमपि सुकरं । शाब्दन्तु संसर्गज्ञानं प्रथमं न भवति ज्ञानान्तरन्तु भवत्येव। न चैवं

शब्दो न प्रमाणं तदर्थस्य प्रागेव सिद्धेरिति वाच्यम् । तवापि तुल्यत्वात् । ननु तथापि कथमर्थविशेषसिद्धिः विशेषेण व्याप्त्यग्रहादिति चेत्#्#् । न । यथा यो यत्र प्रवत्र्तते स तज्ज्ञानातीति सामान्यतोव्याप्तिज्ञाने पाकादौ प्रवृत्तिदर्शनात् पाकविषयकार्यताज्ञानानुमानं, यथा चेष्टाविशेषदर्शनात् दशसंख्याभिप्रायमात्रज्ञाने घटे तच्चेष्टादर्शनात् घटे दशत्वज्ञानं तथा सामान्यतोव्याप्त्यावापि विशेषसिद्धिः ।

यद्वा इदं वाक्यं साकाङ्क्षैवतदर्थविषयकैकज्ञानहेतुकं आप्तोक्तत्वे सति एतदर्थप्रतिपादकत्वात् मद्वाक्यवत्, तत एते पदार्थाः परस्परसंसर्गवन्तः साकाङ्क्त्वे सत्येकज्ञानविषयत्वात् सत्यरजतज्ञानविषयवत्, एवं वक्तुर्यथार्थवाक्यार्थज्ञानेऽनुमिते प्रकरणादिना वक्त्रभिप्रेतयथार्थवाक्यार्थज्ञानेऽनुमिते प्रकरणादिना वक्त्रभिप्रेतयथार्थप्रतीतिपरत्वज्ञानं ततो वेदतुल्यतया शब्दादर्थप्रत्यय इत्यनुवादक शब्दः वक्तृज्ञानावच्छेदकतया संसर्गज्ञानानुमानात् तदुपजीविसंसर्गानुमानाद्वा वाक्यार्थस्य प्रागेव सिद्धेः । यत्तु संसर्गाग्रहो भ्रमः तदभावश्र्च संसर्गग्रह एवेति भमाभावेऽनुमीयमाने संसर्गज्ञानमेवानुमितं इत्याप्तत्वानुमानान्तर्गतमेव वक्तृज्ञानानुमानं न तु वक्तृज्ञ्ज्ञानानुमाने तलिङ्गं इति । तन्न, भ्रमोहि ज्ञानद्वयं अगृहीतभेदं तदभावश्र्च गृहीतभेदज्ञानं, न हि ज्ञानाभावे सुषुप्तौ भ्रमव्यवहारः, ततो भ्रमाभावनिश्र्चयानन्तरं वक्तृज्ञानानुमानं, तर्हि यादृशं लिङ्गं तादृशमेव गमकमस्त्विति ।

अत्रोच्यते । यथार्थवाक्यर्थदीपरत्वं न ज्ञातं प्रमोत्पादकं गौरवात् वाक्यर्थनिरूप्यत्वेन प्रथमं ज्ञातमशक्यत्वाच्च तस्यापूर्वत्वात् । यच्च लोके भ्रमादि निरासानन्तरं वक्तृज्ञानाच्छेदकतया तदग्रे स्वातन्त्र#ेण वा पुमभिप्रेतवाक्यार्थज्ञाने तत्प्रतीतिपरत्वं प्रकरणादिना ज्ञायत इत्युक्तं, तन्न, वाक्यार्थमज्ञात्वा अत्रायभ्रान्त इति ज्ञातुं पुरुषत्वाद्वक्तुभ्र्रम - प्रमादसम्भवेन प्रथमं भ्रमाद्यजन्यत्वस्य ग्रहीतुमशक्यत्वात् प्रवृत्तिसंवादादेज्र्ज्ञानोत्तरकालीनत्वात् भ्रमादिजन्यविलक्षणत्वेन च शब्दस्याज्ञानात् ज्ञाने वा यादृशोलिङ्गत्वं तस्यैव प्रत्यायकत्वं अव्यभिचारात् वेदेऽपि वाक्यार्थमविज्ञाय तद्यथार्थप्रतीतिपरत्वं न्यायेनापि ज्ञातुमशक्यं विषयनिरूप्यत्वात् प्रतीतेः लोके तात्पर्यनिरूपणार्थमशाब्दवाक्यार्थप्रतीतेः प्रथमं त्वयापि स्वीकारात् । अन्यथा वक्तृज्ञानानुमानं न स्यात् । न च लोकवत्मानान्तरात्तदवगमः, वेदार्थस्य तदविषयत्वात् वेदस्य प्रथमं मूकत्वत्, न च न्यायसिद्धे वेदार्थे मानान्तरातात्पर्यग्रहः, वेदस्यानुवादकतापत्तेः शब्दस्याप्रमाणत्वापत्तेर्वा । अज्ञाते वाक्यर्थे तर्क - संशययोरप्यभावात् अयं पदार्थोऽपरपदार्थसंसृष्टो न वेति संशये तर्के वा एककोटौ संसर्ग उपस्थित इति चेत्, न, अनिश्र्चिते तात्पर्यानिश्र्चयात् तयोरगृहीततासंसर्गविषत्वेनासदर्थविषयकत्वेन वा वाक्यर्थाविषयत्वाच्च । अन्यथा लाकेऽपि ताभ्यामेवोपस्थितिरिति किं वक्तृज्ञानानुमानेन । वस्तुतस्तु यदि यथार्थतात्पर्यकत्वं ज्ञानं शब्दप्रमोत्पादकं तदा लोक-वेदयास्तादृशपदस्मारितत्वेन पदार्थसंसर्गानुमितिसम्भवात् न शब्दः प्रमाणं स्यात् । अपि च पुंवाक्यस्य दोष-विशिष्टज्ञानान्यतरजन्यत्वेऽनुमिते परिशेषाद्दोषाजन्यत्वनिश्र्चयदशायां वेदतुल्या सामाग्री पुंवाक्येऽपि वृत्तेति तत एवार्थनिश्र्चयात् वेदवत्तस्यापि प्रामाण्यं, अनुमितानुमानस्य व्याप्तिस्मृत्यादिविलम्बितत्वात् । एतेनाबाधितार्थपरत्वं लोके वेदे च प्रमापकं लोके वाक्यर्थो बाधितोऽपि दृष्ट इति श्रोतुः प्रमाणावतारं विना न बाधाभावनिश्र्चयः स च क्वचिच्छ्तुरिन्द्रियेण क्वचिद्वक्तुराप्तत्वानुमानेन वेदे तु न्यायात्तन्निश्र्चयः तदर्थस्य प्रमाणान्तराविषयत्वात् न तत्र शङ्केति सामाग्रीभेद इति निरस्तं । प्रथमभ्रमाद्यभावस्याप्तस्य वा निश्र्चेतुमशक्यत्वात् वेदस्यानुवादकतापत्तेश्र्च । तस्मात् भ्रमाद्यजन्यत्वं आप्तोकत्वं अबाधितार्थकत्वं यथार्थतात्पर्यकत्वं निरस्तव्यभिचारशङ्कत्वं अन्यद्वा व्यभिचारिव्यावृत्तं यत्प्रमोत्पादकं तत् स्वरूपसत् न ज्ञातं । अन्यथा तादृशस्य वाक्यार्थाव्यभिचारितया तादृशपदस्मारितत्वात् लिङ्गादेव संसर्गसिद्धिः स्यादिति जितं वैशिषिकैः । अथ व्यवहारानुमितव्यवहत्र्तृकार्यान्वितज्ञाने उपस्थितत्वेन पदानां हेतुत्वग्रहादन्विताभिधायकत्वं तदानीं शब्दस्य लिङ्गत्वेनोनुपस्थितेरिति चेत् । न । लिङ्गाभावेनैव शब्दादन्वितज्ञानोपपत्तेर्नाकाङ्क्षादिमच्छब्देन कारणता गौरवात् । शब्दस्य लिङ्गत्वं सम्भवदपि बालेन न ज्ञातमिति चेत्, सोऽयं बालस्य दोषो न वस्तुन इत्यादि वक्ष्यते । किञ्चैवं लोकवद्वेदेऽपि अनुवादकता स्यात् । एतेन वाक्यार्थतात्पर्यग्राहकानुमानात् तात्पर्यावच्छेदकतया तदुपजीविनोऽनुमानात् स्वातन्त्र#ेण वाक्यार्थसिद्धेर्न शब्दः प्रमाणमिति वैशेषिकमतपास्तम् । यथार्थतात्पर्यग्रहस्य वाक्यार्थबोधाहेतुत्वात् । यत्तु ज्ञायमानकरणे इति, तन्न, यथार्थतात्पर्यकत्वादेः प्रथमं ज्ञातुमशक्यत्वेनानुमानस्य बाधितत्वात् व्याप्त्यसिद्धेश्र्च । न हि व्याप्तिः शब्दशक्तिश्र्च कारणं, किन्तु तद्धीः, अतीतेऽनुमितिदर्शनात् । अपभ्रंशादौ शक्तिभ्रमादन्वयबोधाच्च । न च सैवापयुज्यत इति साध्यं, प्रथमं तदसम्भवात् । तस्मात् यत् अर्थाव्यभिचारित्वेन ज्ञातं कारणं तत्र व्यभिचारिवैलक्षण्यज्ञानमुपयुजन्यते अन्यथा शब्दस्यार्थव्यभिचारितया ज्ञातस्य ज्ञापकत्वे लिङ्गतापत्तेर्वज्जलेपायमानत्वात् । स्यादेतदनाप्तोक्ते बाधकेनार्थाभावदर्शनात् आकाङ्क्षादिमद्वाक्यत्वेन सदर्थकं बाधितार्थकं वेति संशयान्न तावन्मात्रादर्थनिश्र्चयः, न हि संशायकमेव निश्र्चायकं, इत्यधिकमपेक्षणीयमिति चेत् । न ।अर्थसंशयस्य तद्बाधसंशयस्य वा प्रमाणाप्रतिबन्धकत्वात् । वह्नि-तद्बाधयोः संशयेऽपि प्रत्यक्षानुमानादिना अर्थनिश्र्चयात् अन्यथा प्रमाणमात्रोच्छेदः, तत्पूर्वमर्थ-तद्बाधसंशयात् । विनाप्यर्थं वाक्यरचना

सम्भत्यत एतस्यायमर्थो न वा, एतत्सदर्थकं न वा, एतज्जन्यज्ञानं सद्विषयकं न वेति संशयस्यार्थावगमोत्तरकालीनत्वाच्च । तस्मादाप्तोक्तत्वं भ्रमाद्यजन्यत्वं अबाधितार्थकत्वं यथार्थवाक्यार्थप्रतीतिपरत्वं वा ज्ञातं अनुगतमपि न हेतुः प्रथमं ग्रहीतुमशक्यत्वात्, किन्तु तात्पर्यग्राहकत्वेनाभिमतानां न्यायजन्यज्ञान-प्रकरणादीनामन्यतरत् तात्पर्यव्याप्यत्वेनानुगतं, तथाकाङ्क्षासत्तिनिश्र्चयः, तद्विपर्यये संशये च शाब्दज्ञानाभावात् । योग्यतायाश्र्च ज्ञानमत्रं हेतुः तत्संशये विपर्यये प्रमायाञ्च वाक्यार्थज्ञानात् , तथा विभक्त्#ायदिसमभिव्याहरः सम्भूयोच्चारणञ्च शाब्दज्ञानमात्रे कारणानि नानार्थे श्र्लिष्टे चानेकोपस्थितावपि प्रकरणादिवशादेकमर्थमादयान्वयबोधः । लक्षणा च न तात्पर्यानुपपत्त्या किन्त्वन्वयानुपपत्त्यैव प्रकरणाद्भोजनप्रजनकत्वेनावगतप्रवेशनस्य यष्ट¬न्वयानुपपत्तेः । अजहत्स्वार्थायां प्रकरणादेव छत्रि तदितरस्य यान्तीत्यनेन गमनकत्र्तृत्वमवगतं तदन्वयानुपपत्तिच्छत्रिमात्रे, पचतीत्यस्य कलायमित्यन्योक्तेन समं नार्थप्रत्याकत्वं समभिव्याहाराभावात्, तवापि तस्य तात्पर्यग्राहकत्वात् सहोच्चरितानां सम्भूयार्थप्रत्यायकत्वस्य व्युत्पत्तिसिद्धत्वात् ।

अन्ये तु नानार्थे लक्षणायाञ्च नियतोपस्थित्यर्थं पदार्थे तात्पर्यग्रहापेक्षा तेन विना तदभावात् न वाक्यार्थे, तदज्ञानेऽपि प्रकरणादिना सैन्धवपदं तुरगपरं काकपदं उपघातकपरमिति हि प्रतियन्ति । अन्यत्रान्वयप्रतियोग्युपस्थितिः तात्पर्यग्रहं विनैवेति न तदपेक्षा । वस्तुतस्तु इतरपदस्य इतरपदार्थसंसर्गज्ञानपरत्वं तात्पर्यं तच्च वेदे न्यायादवधार्यते लोके न्यायात् प्रकरणादेर्वा । अत एव शाब्दबोधे नानियतहेतुकत्वं तच्चेतरपदार्थसंसर्गज्ञानं वाक्यर्थज्ञानमेवेति सामान्यकारेण तत्परत्वग्रहः हेतुर्न तु विशिष्य, तच्च स्वपरपदार्थयोः संसर्गानुभवजननं विना अनुपपन्नमिति पदानि सम्भूय जनयन्ति, अत एव नानार्थे विनिगमना, तदनुपपत्तिरेव लक्षणाबीजं तदभावादेव पचतिपदे न स्मृतकलायान्वयबोध इति सिद्धं शब्दस्य प्रमाणान्तरत्वं । तस्य च निराकाङ्क्षादौ संसर्गज्ञानाजनकत्वात् आङ्क्षादिकं सहकारीति ।

# तत्त्वचिन्तामणौ शब्दाकाङ्क्षावादपूर्वपक्षः

अथ केयमाकङ्क्षा, न तावदविनाभावः, नीलं सरोजमित्यादावभावात् । विमलं जलं नद्याः कच्छे महिष इत्यत्र जलान्वितनद्या अविनाभावात् कच्छे साकाङ्क्षतापत्तेः । नापि समभिव्याहृमतपदस्मारितपदार्थजिज्ञासा, अजिज्ञासोरपि वाक्यर्थबोधात् विश्वजिता यजेत द्वारं इत्यत्रापदार्थयोप्यधिकारिणोऽप्याहृमतस्य पिधानस्य चाकाङ्क्षितत्वाच्च, तत्र शब्दकल्पनपक्षेऽपि घटः कर्मत्वमानयनं कृतिरित्यत्र जिज्ञासितस्यानयनादेराकाङ्क्षितत्वापत्तेः । अथ जिज्ञासायोग्यता, सा जिज्ञासा च विशेषाज्ञाने भवति, योग्यता च श्रोतरि तदुच्चारणजन्यसंसर्गावगमप्रागभावः, विमलं जलं नद्याः कच्छे महिष इत्यत्र तात्पर्यवशात् कदाचित् नद्याः कच्छे संसर्गावगमात् तत्प्रागभावसत्त्वेऽपि श्रोतरि तदुच्चारणेन तात्पर्यवशात् जलान्वितनद्याः कच्छे संसर्गावगमोनेति न तत्प्रगाभावः, घटः कर्मत्वमानयनमित्यत्रापि तथेति चेत् । न । निराकाङ्क्षे तदुच्चारणजन्यसंसर्गावगमप्रागभावस्य सिद्ध्यसिद्धिपराहतत्वात् । किञ्च यत्रैकोविमलं जलमित्यश्रुत्वैव तात्पर्यभ्रमेणा वा नद्याः कच्छान्वयपरत्वमवैति, अपरः समस्तेन श्रुत्वा नद्या जलान्वयपरत्वमवधारयति, तत्रोभयरपि तदुच्चारणजन्यसंसर्गावगमात् नद्या इत्युभयसाकाङ्क्षं स्यात् ।

अपि च प्रगाभावाभावस्य कारणान्तराभावव्याप्तत्वात् तत एव कार्याभाव इति किमाकाङ्क्षया । एवञ्च योग्यतासत्ती अपि न हेतू अयोग्ये अनासन्ने च तदुच्चारणजन्यसंसर्गज्ञानाभावेन तत्प्रागभावाभावात् । न चैवं बाधाभावस्यानुमित्यादावपि हेतुत्वं, प्रागभावाभावेनैव कार्याभावात् प्रागभावस्य च कार्यमात्रहेतुत्वात् । शब्दे नासाधारण्यं उत्थितोत्थाप्याकाङ्क्षयोरुत्कर्षापकर्षौ न स्यातां प्रागभावे तदभावात् ।

अथ ज्ञाप्य-तदितरान्वयप्रकारकजिज्ञासानुकूलपदार्थोपस्थितिजनकत्वे सत्यजनिततात्पर्यविषयान्वयबोधत्वमाकाङ्क्षा, घटमानयतीत्यत्र घटमित्युक्ते किमानयति पश्यति वा, आनयतीत्युक्ते किं घटं अन्यद्वेति जिज्ञासा भवति । घटः कर्मत्वमाननयनं कृतिरित्यत्राभेदेन नान्वयोऽयोग्यत्वात्, घटस्यानयनमिति तु नान्वयबोधः घट इतिपदात् सम्बन्धित्वेन घटस्यानुपस्थितेः । राज्ञ इति पुत्रेण जनितान्वयबोधत्वात् न पुरुषमाकाङ्क्षतीति चेत्, तर्हि नाम-विभक्ति-धात्वाख्यातार्थानां घट-कर्मत्वानयन-कृतीनां स्वरूपेणोपस्थितिर्नान्वयन्वयप्रकारकजिज्ञासानुकूलेति तत्र नाकाङ्क्षा स्यात् । घटः कर्मत्वमानयनं कृतिरित्यत्र घटमानयतीत्यत्रेवान्वयबोधः स्यात्, न हि तत्र पदार्थस्वरूपाणां एतद्वैलक्षण्येनोपस्थितिः, त्रयाणां तुल्यवत् स्मरणे प्रथमं यतो राज्ञ इति पुरुषेण नान्वेति किन्तु पुत्रेण ततएवाग्रेऽपि व्यर्थमजनितान्वयबोधत्वमिति ।

### शब्दाकाङ्क्षावादसिद्धान्तः

उच्यते । अभिधानापर्यवसानमाकाङ्क्षा यस्य येन विना न स्वार्थान्वयानुभावकत्वं तस्य तदपर्यवसानं, नाम-विभकि-धत्वाख्यात-क्रिया-कारकपदानां परस्परं विना न परस्परस्य स्वार्थान्वयानुभवजनकत्वं । परमते नीलघटोऽस्ति नीलं घटमानयेत्यादौ नामार्थानां कारकाणाञ्च न परस्परमन्वयबोधः विशेषणान्वितविभक्त्यर्थानन्वयादिति न विशिष्टवैशिष्ट¬ेनान्वयः किन्त्वार्थः समाजः । अस्माकन्तु नील-घटयोरभेदानुभवबलादभेद एव संसर्गः विशेषविभक्तिः साधुत्वार्थं ।

यद्वा समानविभक्तिकयोरभेदानुभवबलात् विशेषणान्वितविभक्तेरभेदार्थकत्वं अतो विशेषण-विशेष्यभावानुभावकत्वं तत्पदयोः, न परस्परं विना । द्वारमित्यत्राध्याहारं विना प्रतियोग्यलाभात् न स्वार्थान्वयानुभावकत्वं, विश्वजिता यजेतेत्यत्र ममेदं कार्यमिति प्रवत्तकतात्पर्यविषयज्ञानं नाधिकारिणां विनेति तदाकाङ्क्षा ।

यद्वा कत्र्तुरिवाधिकारिणोऽपि आक्षेपादेव लाभ इति तदन्वयो न शाब्दः किन्त्वानुमानिकः, गौणलाक्षणिकयोरननुभावकत्वपक्षे तदुपस्थापितस्याध्याहृमतस्येवेतरपदं विना नानुभावकत्वं । घटः कर्मत्वं आनयनं कृतिरित्यादौ अभेदेन नान्वयबोधोऽयोग्यत्वात् तत्तत्पदेभ्यस्तात्पर्यविषयतत्तत्पदार्थस्वरूपज्ञानञ्च पदान्तरं विनैव । घटमानयतीत्यत्रेव भ्रमेण तथान्वयतात्पर्येऽपि क्रिया -कारकभावेन नान्वयः नाम-विभकि-धात्वाख्यात-क्रिया-कारकपदानां अन्वयबोधे तान्येव पदानि समर्थानि न तु तदर्थकानि पदान्तराणि । अग्निः करणत्वं ओदनः कर्मता पाकः कृतिः इष्टसाधनता इत्यादिपदेभ्यः अग्निर्नोदनं पचेतेत्यत्रेव अन्वयाबोधात्, अग्निकरणकौदनकर्मकपाकविषयककृतिरिष्टसाधनं इति तु वाक्यं न पदं, अत एव द्वारमित्यत्र पिधेहिपदाध्याहारः, क्रियापदार्थस्यान्यत उपस्थितौ अपि कारकानन्वयात् असामथ्र्यञ्च स्वभावात् । अनासन्नमपि आसन्नतादशायां आसन्नत्वभ्रमेण वा अन्वयबोधसमर्थमेव ।

वह्निना सिञ्चतीत्यत्र क्रिया-कारकपदयोरन्वयबोधे सामर्थ्येऽपि अयोग्यताज्ञानं प्रतिबन्धकं दाहे समर्थस्याप्यग्नेर्मणिरिव । अत एव योग्यताभ्रमात् प्रतिबन्धकाभावे ततोऽप्यन्वयबोधः । नहि स्वभावतोऽसमर्थं आरोपितसामर्थ्यं वा दहति पचति वेति, प्रकृते तु पदार्थस्वरूपज्ञानं न त्वन्वयभ्रमोऽपि । पुरुषपदं विनापि राज्ञा इत्यस्य पुत्रेण समं स्वार्थान्वयानुभावकत्वं इति न तदाकाङ्क्षा ।

यद्वा त्रयाणां स्मरणोऽजनितान्वयबोधदशायां पुरुषान्वये तात्पर्याभावात् नान्वयबोध इत्यग्रेऽपि तथा । न च पुत्रस्योत्थिताकाङ्क्षत्वात् तेनैवान्वयबोध इति । वाच्यम् । तात्पर्यवशात् पुरुषेणैव प्रथममन्वयबोधात् । अतएवान्वयबोधसमर्थत्वे सति अजनिततात्पर्यविषयान्वयबोधत्वमाकाङ्क्षेति केचित् । प्रकृति-प्रत्ययाभ्यामन्वयबोधे जनितेऽपि वाक्यैकवाक्यतावत् क्रिया-कारकपदयोरजनितान्वयबोधत्वमाकाङ्क्षा ।

नव्यास्तु पदविशेषजन्यपदार्थोपस्थितिः घटः कर्मत्वं आनयनं कृतिरित्येवम्बिधपदाजन्यपदार्थोपस्थितिर्वा आसत्तिरन्वयबोधाङ्गमित्यासत्त्यभावादेवम्बिधशब्दान्नान्वयबोधः त्वयाप्येवम्बिपदार्थोपस्थिते राकाङ्क्षाहेतुत्वेनावश्यमभ्युपेयत्वात्, जनितान्वयबोधात् नान्वयान्तरबोधः तात्पर्याभावादित्याकाङ्क्षायाः कारणत्वमेव नास्ति, किन्तु स्वजनकोपस्थितेः परिचायकत्वमात्रमिति ।

# योग्यतावादपूर्वपक्षः

ननु का योग्यता, न तावत् सजातीयेऽन्वयदर्शनं, यथाकथञ्चित् साजात्यस्याव्यावर्त्तकत्वात् । पदार्थतावच्छेदकेन साजात्यस्याद्यजातः पयः पिबतीत्यदावभावात् वाक्यार्थस्यापूर्वत्वाच्च । नापि समभिव्याहृतपदार्थसंसर्गव्याप्यधर्मवत्त्वं, वाक्यार्थस्यानुमेयत्वापत्तेः । न च वस्तुगत्या संसर्गव्याप्यो यो धर्मस्तद्वस्तं तच्च न ज्ञातुमुपयुज्यते इति नानुमेयः संसर्ग इति वाच्यम् । योग्यताभ्रमाच्छाब्दभ्रमानुपपत्तेः । अत एवान्वयनिश्चयविरह एव योग्यता स्वरूपसत्ती हेतुः तत्र तद्धर्माभावनिश्चये तत्प्रकारकशाब्दज्ञानानुदयात् इति परास्तम् । नापि समभिव्याहृतपदार्थसंसर्गाभावव्याप्यधर्मश्रून्यत्वम्, प्रमेयमभिधेयमित्यादौ संसर्गाभावस्याप्रसिद्ध्या तदनिरूपणात् गेहनिष्ठघटाभावे प्रमिते घटोऽस्तीतिवाक्यात्तन्निश्चयेऽप्यन्वयज्ञानानुदयाच्च । नापि बाधकप्रमाणाभावः, अन्यच्च यद्बाधकं तदभावस्यायोग्येऽपि सत्त्वात् । नापि प्रकृतसंसर्गबाधकस्याभावः, प्रतियोगिसिद्ध्यसिद्धिव्याघातात् । न च प्रकृतसंसर्गे अन्यत्र सिद्धस्य बाधकप्रमाणस्याभावः, प्रकृतसंसर्गस्य प्रथमप्रतीतेः अयोग्येऽपि तत्सत्वाच्च । तत्र बाधकमप्यस्तीति चेत्, तर्हि प्रकृतसंसर्गबाधकस्याभावः तच्चाप्रसिद्धम् । अत एव तत्र बाधकस्याप्यनिरूपणम् । नापीतरपदार्थसंसर्गाभावप्रमाविषयत्वाभावोऽपदपदार्थे, केवलान्वयिन्यप्रसिद्धेः । एतेन यत्रासम्बन्धग्राहकं प्रमाणं नास्ति तद्योग्यमिति निरस्तम् । नापि बोधनीयसंसर्गाभावप्रमाविरहः, प्रतियोग्यप्रसिद्धेः, बोधनीयसंसर्गस्य प्रागप्रतीतेः योग्यता च न स्वरूपसत्युपयुज्यते इत्युक्तम्, अयोग्ये तत् सत्त्वस्यानिरूपणाच्च । अपि च स्वीयबाधकप्रमाविरहस्यायोग्येऽपि सत्त्वात् बाधकप्रमामात्रविरहस्य योग्येऽपि ज्ञातुमशक्यत्वात् परप्रमाया अयोग्यत्वात् । न च स्वरूपसन्नेवायं हेतुः, स्वीयबाधकप्रमाविरहदाशायां योग्यताभ्रमेण शाब्दभ्रमानुपपत्तेः, अन्वयप्रयोजकरूपवत्त्वेन बाधकप्रमामात्रविरहोऽनुमेय इति चेत् । न । सेकानान्वितितोये द्रवद्रव्यत्वे सत्यपि बाधकसत्त्वेन व्यभिचारात् उपजीव्यत्वेन तस्यैव योग्यतात्वापत्तेश्च । न चैवमेवेति वाच्यम्। आकाङ्क्षासत्त्यन्वयप्रयोजकरूपवत्त्वे सत्यप्यनाप्तवाक्ये बाधकप्रमायामन्वाबोधात्, बाधकप्रमाविरहो हेतुरिति चेत्तह्यरावश्यकत्वात् सैव योग्यता ।

### योग्यतावादसिद्धान्तः

उच्यते बाधकप्रमाविरहो योग्यता, सा चेतरपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावः । प्रमेयं वाच्यमित्यत्र प्रमेयनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वं गोत्वे प्रसिद्धं वाच्यत्वसंसर्गे तदभावः ।

वस्तुतस्त्वितरपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वं योग्यता लाघवात् शक्यज्ञानत्वाञ्च ।

न च नरशिरःशौचानुमानबाधात् तदशौचबोधकशब्दात् अन्वयाबोध इति वाच्यम् । उपजीव्यजातीयत्वेन शब्दस्य बलवत्त्वात् तेनैव तदनुमानबाधात् । नन्वाकाङ्क्षासत्तिमत्त्वेन शब्दस्य प्रमाणता न तु योग्यतापि तन्निवेशिनो बाधाभावस्य प्रमामात्रहेतुत्वादिति चेत् । न । बाधे हि प्रमाणदोषोऽवश्यं वक्तव्यः, अन्यथा प्रमाणविषये बाधासम्भवात् यथानुमाने बाधादुपाधिकल्पनद्वारा व्याप्तिविघातः, निरूपाधौ बाधानवकाशात् ।

सेयं न स्वरूपसतो प्रयोजिका शाब्दभासोच्छेदप्रसङ्गात् । तन्निश्चयश्च न भवत्युपायाभावात् इति चेत् । न । संशय-विपर्य-प्रमासाधारणस्य योग्यताज्ञानमात्रस्य कारणत्वात् । अयोग्यताज्ञानस्य प्रतिबन्धकस्य सर्वत्राभावात् क्वचित्तन्निश्चयोऽपि योग्यतानुपलब्धा यथेह घटो नास्तीति ।

# आसत्तिवादपर्वपक्षः

आसत्तिश्चाव्यवधानेनान्वयप्रतियोग्युपस्थितिः, सा च स्मृतिर्नानुभवोऽतोनान्योन्याश्रयः । अथ नानाविशेषणक-कर्म-कत्तृ-करणाधिकरण-क्रियादिक्रमिकपदज्ञानजन्यक्रमिकपदार्थस्मृतीनां न यौगपद्यं सम्भवति आशुतरविनाशिनां क्रमिकाणां मलकानुपपत्तेरिति कथं तावत्पदार्थान्वयबोधः विशेषणज्ञानसाध्यत्वाद्विशिष्टज्ञानस्येति चेत्, श्रौत्रप्रत्येकपदानुभवजन्यसंस्कारमेलकादेकदैव तावत्पदस्मृतिः तत

एकदैव तावत्पदार्थस्मृतौ सत्यां वाक्यार्थानुभवः । न चान्यविषयकसंस्कारेण नान्यत्र स्मरणमिति वाच्यम् । वक्यार्थानुपपत्त्या फलबलेन संस्काराणां परस्परसहकारेण तत्रैकस्मरणकल्पनात् । प्रत्येकवर्णसंस्काराणामिवानन्यगतिकतया पदस्मरणे । अथ *यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते । तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते* । न चैवमन्वयान्तराभिधानं न स्यात् विरम्य व्यापाराभावादिति वाच्यम् । एवमपि प्रथममनन्वये हेत्वनुपन्यासात् उत्तरस्य हीदं सामग्रीवैकल्यं न पूर्वस्येति चेत्, अस्तु तावदेवं तथापि चरमं तावत्पदार्थघटितवाक्यार्थानुभवे उक्तैव गतिरनन्यगतिकत्वात् । अत्र वदन्ति, सन्निधिर्न पदजन्यैवान्यवबोधहेतुः द्वारमित्यादौ अध्याहमतेनापि पिधानादिना अन्वयबोधदर्शनात् । न च पिधेहीति शब्द एवाध्याह्रियते, अनुपयोगात् । अर्थस्यैवान्वयप्रतियोगित्वेनोपयोगित्वात् आवश्यकत्वाच्च । अर्थापत्तेरुपपादकविषयत्वात् । न च शब्दमात्रमुपपादकं, अपि तु तदर्थः, अवश्यकल्प्यार्थसाहचर्येण दैववशसम्पन्नशब्दस्मृतेरन्यथासिद्धेः, अन्यथा पदबोधितस्यैवार्थस्यान्वयबोधकत्वमिति नियमशकिकल्पनापत्तेः । स्वार्थान्वयपरत्वाच्छब्दानां द्वारमिति न पिधानान्वयबोधकमिति तदन्वयबोधार्थमवश्यं शब्दकल्पनमिति चेत् । न । लक्षणानां व्यभिचारात् तवाप्याक्षिप्तेन कत्र्रान्वयबोधाच्च । अथ द्वारपदसहभावमात्रं पिधेहिशब्दस्य कल्प्यते लाघवात् । न च पिधानाभिधायकानेकशब्दोपस्थितौ विनिगमकविरहः, संस्कारतारतम्यात् पदविशेषस्मृतेरिति चेत् । न । आकाङ्क्षादिमत्प्रतियोग्यन्वितस्वार्थपरत्वस्य क्रृप्तत्वात् लाघवेनार्थाध्याहारात् । न च श्रुतपदानि लब्धप्रयोजनानीति कथमप्यध्याहमते तेषां तात्पर्यमिति वाच्यम् । श्रुतार्थान्वयानुपपत्त्या अध्याहमते

तात्पर्यात् । कथं तह्र्रोदनं पचतीत्यत्र समभिव्याहमतमात्रान्वयः कलायादेरपि स्मृतत्वात् इति चेत्। न । तात्पर्यनियमादित्यवेहि यत्परः शब्दः स हि शब्दार्थः, अन्यथा तवापि दैववशस्मृतकलायपदोपस्थापितेनान्वयबोधः स्यात् अयं देवदत्त ओदनमित्यादिवाक्ये क्रियापदाध्याहारभावेन कत्र्तुरनभिधानात् तृतीया स्यात् इति चेत् । न । अध्याहमतपचतिपदेनापि कत्र्तुरनभिधानात्, कत्र्तुसंख्याभिहितेति चेत् । न । देवदत्तस्य पाक इत्यत्रापि तृतीयापत्तेः, तात्पर्यतस्तच्च व्यवस्थेति चेत्, तुल्यम् । ननु द्वारं पिधेहीत्यादौ पिधानशब्दानुभवे पिधानोपस्थापकपदत्वेन जनकत्वमिति चेत् । न । अन्वयप्रतियोग्युपस्थापकपदत्वेन जनकत्वात् न तु तदुपस्थापकयावतत्पदत्वेन गौरवात् । एवं पिधानान्वयबोधेऽपि । अन्यथा गौण-लाक्षणिकयोरन्वयबोधो न स्यात् तयोरननुभावकत्वादिति ।।

### आसत्तिवादसिद्धान्तः

उच्यते, क्रियापदोपस्थापिता क्रिया, कारकपदोपस्थापितञ्च कारकं परस्परमाकाङ्क्षति न तूपस्थितिमात्रं अन्यथा द्वारं कर्मता पिधेहि, द्वारं पिधानं कृतिरित्यत्रापि क्रिया-कर्माध्याहार इवान्वयबोधप्रसङ्गः

क्रियायाः कर्मणश्चोपस्थितेस्तुल्यत्वात् । एवं विधपदोपस्थापिते परस्परमाकाङ्क्षा नस्तीति चेत्, तह्र्राकाङ्क्षायां पदविशेषोपस्थापितत्वं तन्त्रं न तूपस्थितिमात्रं, अर्थविशेषेऽसाधुत्वान्नात्रान्वयबोध इति चेत्, न, पिधेहीति पदं विना द्वारमित्यस्याप्यसाधुत्वात् तदर्थयोगे साधुत्वस्य तुल्यत्वात् साधुत्वज्ञानस्यान्वयबोधेऽप्रयोजकत्वाच्च गौरवादपभ्रंशादप्यन्वयबोधाच्च । न चात्रासंसर्गाग्रहः, बाधकाभावात् । तस्मात् क्रिया पदस्य कारकपदेन कारकपदस्य क्रियापदेन सहान्वयबोधकत्वं न त्वेकं विना तृतीयानुपपत्तिः, नहि क्रियापदार्थयोगे द्वितीया, घट आनयनं कृतिरित्यत्रापि द्वितीयापत्तेः, तथा च पुष्पेभ्य इत्यत्र स्पृहयतिपदाध्याहारं विना चतुथ्र्यनुपपत्तिः । यदि स्पृहयति पदार्थयोगे चतुर्थो तदा पुष्पमिच्छतीत्यत्रापि स्यात् स्पृहयतीच्छतिपदयोरेकार्थत्वात् । अथ साधुत्वार्थं द्वारं पुष्पेभ्य इत्यत्र पिधेहि-स्पृहयतिपदाध्याहारोऽनुमन्यते न त्वन्वयबोधार्थं तस्यान्वयप्रतियोगिविज्ञानादेवोपपत्तेरिति चेत्, तर्हि क्रियापदयोगं विना न कारकविभक्तिः, कारकपदयोगं विना न तदन्वययोग्यं क्रियापदमिति केवलकारकपदे क्रियापदाध्याहारः, केवलक्रियायाञ्च कारकपदाध्याहारः साधुत्वार्थमावश्यक इति तज्जन्योपस्थितिरन्वयबोधौपयिको तस्मात् क्रिया-कारकपदोपस्थापितयोरेव क्रिया-कारकयोः परस्परमन्वय इति शब्दाध्याहार एव । कत्राक्षेपे तु वक्ष्यामः ।।

## तात्पर्यवादः

तात्पर्यधीनं शब्दप्रमाण्यं तत्र तत्परत्वं न तत्साध्यकत्वं पदार्थ-तत्संसर्गयोः शब्दासाध्यत्वात् । अथ तङ्गोचरप्रवृत्तिनिवृत्तिसाध्यकत्वं तत्परत्वं, तच्च भाव्यार्थस्य साक्षात् भूतार्थस्य तु प्रशंसा-निन्दावाक्यस्य प्रशस्तनिन्दितार्थप्रतिपादनद्वारा लाक्षणिकस्य लक्षणीयविषयप्रवृत्ति-निवृत्तिजनकत्वं तत्परत्वमिति चेत्, न, तत्परत्वे तज्ज्ञानं जनयित्वा तत्र प्रवत्र्तकत्वं तत्प्रवत्र्तकत्वञ्च तत्परत्वमिति परस्पराश्रयात् । लाक्षणिकस्याननु#ाभावकत्वेऽपि लक्षणीयपरत्वात् काव्यादेः स्वरूपाख्यानमात्रपरत्वेनापि पर्यवसानाञ्च । ननु तत्बुद्धिजनकत्वं तत्परत्वं प्रशंसा-निन्दावाक्यमपि प्रशस्त-निन्दितस्वार्थधीहेतुत्वेन तत्परमेव, तच्च ज्ञानं प्रशस्ते सर्वः प्रवर्तते निन्दिताञ्च निवर्तते इति स्वविषये प्रवृत्तिनिवृत्तौ जनयतीति तत्परमुच्यत इति चेत् । न । गौण-लाक्षणिकयोरनुभावकत्वात् तद्बुद्धिजनने तत्परत्वमित्यन्योन्याश्रयाच्च । तज्जननयोग्यत्वमिति चेत्, तह्र्रेकत्रोच्चारणे नानार्थे नानार्थपरत्वं लक्षणायाञ्च मुख्यार्थपरत्वं स्यात् योग्यतायाः सत्त्वात् । नापि तत्प्रतिपाद्यकत्वं, तात्पर्यं विना न तथेत्यन्योन्याश्रयात् । प्रशंसा-निन्दावाक्यस्य प्रवृत्त्याद्यप्रतिपादकत्वात् लाक्षणिकस्याप्रतिपादकत्वाच्च । अथ गङ्गापदं स्वार्थाविनाभावि तीरं प्रतिपादयत्तत्परमिति चेत् । न। मञ्चाः क्रोशन्तीत्यत्र तेन विनापि पुरुषे तात्पर्यात् गङ्गादिपदं मत्स्यादिपरं मुख्ये तीरपरञ्च स्यात् अविनाभावस्य तादवस्थ्यात् । मुख्ये बाधके सतीति चेत्, तर्हि मुख्यार्थपरतैव न स्यात् न स्याच्च गच्छ गच्छसीत्यत्र गमनाभावपरत्वं । उच्यते । तत्प्रयोजनकत्वं तत्परत्वं तदर्थश्च प्रतीतिः प्रवृत्ति-निवृत्ती च,

प्रयोजनत्वञ्च न साध्यत्वंअन्योन्याश्रयात् । नापि प्रतिपाद्येच्छाविषयत्वं, यस्य यदिच्छाविषयः तं प्रतितत्परत्वापत्तेः । तदर्थसाध्यत्वेन इच्छानियम इति चेत् । न । इह धूम इत्यत्र जन्य-ज्ञाप्यभेदेन साध्यस्य बहु विधतया वाक्यभेदप्रसङ्गात् पुमिच्छया नियन्तुमशक्यत्वात्, किन्तु प्रतिपादकेच्छाविषयत्वं तत्परत्वं, यः शब्दः वक्ता यदिच्छया प्रयुक्तः स तत्परः, सा चेच्छा

प्रतिपाद्यधी-प्रवृत्ति-निवृत्तिविषयेति तत्परत्वं । नानार्थात् श्लिष्टादनेकपदार्थान्वितैकक्रियापदात् मुख्यलाक्षणिकपराच्चावृत्त्या क्रमेणानेकपदार्थज्ञानं न त्वेकदैव, सकृदुच्चरितस्य सकृदर्थपरत्वनियमेनैकत्रोच्चरणे अनेकार्थपरत्वाभावादिति सकलतान्त्रिकैकवाक्यतया वदन्ति ।

वयन्तु ब्रूमः । अनाकपदार्थप्रतीतीच्छया एकमुच्चारणं भवत्येव पुमिच्छायानियन्तुमशक्यत्वात् । यदि च तदुच्चारणं नानेकार्थपरं तदावृत्तिरपि न स्यात् तात्पर्यनिर्वाहार्थमात्रवृत्तिकल्पनात् । अन्यथैकपरेऽपि तदापत्तेः । अत एव तदुच्चारणस्य उभयपरतायां नावृत्तिकल्पणं तस्मात्तुल्यवदनेकार्थोपस्थितौ तात्पर्यादिज्ञाने युगपदनेकान्वयबोधो भवति सामग्रयास्तुल्यत्वात् प्रथममेकस्यान्वयबोधो न तदन्यस्येति नियन्तुमशक्यत्वच्च । अथ विवादध्यासितमक्षपदोच्चारणं एकपदैकशक्तिविषयमेकमेवानुभावति एकत्रोच्चारणे नानाशक्त#ाय नानार्थाननुभावकं नानार्थत्वात् एकपरनानार्थपदवदिति चेत् । न । अनेकार्थानुभवसामग्रीवसत्त्वेन बाधितत्वात् सामग्रीरहस्योपाधित्वाच्च । अतएवाक्षमानयेत्युक्ते भिन्नप्रकरणादिना भिन्ने तात्पर्यप्रमायां भ्रमे वा प्रतिपाद्ययोरेकदैवावृत्िंत विनानेकार्थप्रतीतिर्न तु तत्रैको विलम्बते, एवं घटं पटं वा आनयेत्यत्रानयनस्योभयपरत्वे एकदैवान्वयबोधो नत्वावृत्तिः वाक्यभेदस्त्वर्थभेदात् न ज्ञानभेदात् । गङ्गायां जलं घोषश्च प्रतिवसतीत्यत्र गङ्गापदस्य युगपत्प्रवाह-तीरयोस्तात्पर्यग्रहे तयोद्र्वयोरप्येकदोपेस्थितौ जल-घोषयोरेकदैवान्वयबोधः । न च युगपद्वृत्तिद्वयापत्तिः, इष्टत्वात्, तात्पर्याद्वि वृत्तिः, न तु वृत्त्यनुरोधात् तात्पर्यं, गो#ैणलाक्षणिकयोरुच्छेदापत्तेः तात्पर्यनिर्वाहर्थं वृत्तित्वेन तयोः कल्पनात् । मुख्य-लाक्षिणिकयोरेकैकमात्रपरत्वे तु युगपद्वृत्तिद्वयविरोधः । अनेकान्वयबोधपरत्वे वृत्तिद्वयविरोधस्य दोषत्वे परिभाषापत्तेः, यत्र मुख्यार्थे शीघ्रत्वेन प्रथममन्वयबोधः अनन्तरं लाक्षणिकान्वयबोधः तत्रावृत्तिरेव तस्मात् युगपत्तात्पर्यग्रहे सति नावृत्तिः किन्त्वनेकार्थपरत्वे सत्येव यत्र तात्पर्यग्रहकमादन्वयबोधक्रमः तत्रावृत्तिः प्रथमोच्चारणस्य पर्यवसितत्वादिति । एवञ्च लोके क्तृप्तत्वात् वेदेऽपोदं तात्पर्यमिति तस्य पौरुषेयत्वम् ।

अत्र मीमांसकाः यथोच्चारणपूर्वत्वात् उच्चारणं वेदे परतन्त्रं तथा तात्पर्यमपि तात्पर्यपूर्वकमेवेति परतन्त्रं न तु कस्यापि प्रथमं तात्पर्यं अनादित्वात् पूर्वपूर्ववाक्यार्थज्ञानेच्छयोच्चारणमुपजीव्याग्रिमस्य तदिच्छयोच्चारणात् तदिच्छया तदुच्चारणमेव हि तत्परत्वं लोक-वेदसाधारणं, सा चेच्छा स्वतन्त्रा परतन्त्रा वेति न कश्चिद्विशेषः, तदवधारणाञ्चानादिमी#ामांसापरिशोधितन्यायाद्वेद इत्युभयवादिसिद्धं, अतस्तात्पर्यानुरोधेन वेदस्य न पौरुषेयत्वम् । नन्वर्थज्ञानं विनोच्चरितवेदात् कथमर्थयोः वाक्यार्थज्ञानं विना तदिच्छयोच्चारणाभावात्, प्रतिपुरुषमुच्चारणभेदादिति चेत्, तर्हि पठ¬मानभारतादपि तथाभूतादर्थधीर्न स्यात् व्यासेन यत्प्रतीतीच्छया उच्चारणं कृतं तज्जातीयत्वात् अर्थज्ञानं विनापि पठ¬मानभारतार्थधीरिति चेत्, तर्हि वेदेऽपि तुल्य, तत्तात्पर्यकजातीयत्वस्य नियामकत्वात् अन्यथा पठ¬मानवेदात्तवाप्यर्थधीर्न स्यात् ईश्र्वराप्रणीतत्वात् । अथ वेदः पौरुषेयः वाक्यत्वात् भारतादिवत् इति चेत्, को वेदः, अनुगतधर्माभावेन तस्य शाखासु नानार्थत्वात्, तथाहि न मुख्यवेदपप्रयोगविषयोवेदः मुख्यार्थाकथनात् । नापि शाखासमुदायः, तस्य वेदनिरूप्यत्वात् समुदायस्याप्रतिपादकत्वेन वाक्यत्वासिद्धेश्र्च । नापि स्वर्गकामादिवाक्यं, स्मृति-भारतादेरपि तथात्वात् । नापि सन्दिग्धकर्तृकवाक्यं, वादिनोर्निश्र्चयात्, । वाद्यनुमानयोस्तुल्यत्वेन मध्यस्थस्य संशय इति चेत्, तह्र्रनुमानाभ्यां तस्य संशयोमध्यस्थसंशयप्रश्र्नानन्तरञ्चानुमानमित्यन्योन्याश्रयः । नापि विवादाध्यासितं वाक्यं, अनुगतधर्मं विना विवादस्याप्यभावात् भारतादावपि तत्समावाञ्च । नापि महानजनानां वेदाकारानुगतव्यवहारात् वेदत्वं जातिः, देवदत्तीयत्वाद्यनुमापकशब्दवृत्तिजातिभिः सङ्करप्रसङ्गात् । किञ्च पौरुषेयत्वं न तदर्थधीजन्यत्वं तदुच्चारणधीप्रभवत्वं वा, अध्यापक-तदुभयधीजन्यत्वेन सिद्धसाधनात् । नाप्युच्चारणस्य सादित्वं, प्रत्युच्चारणस्य सादित्वात् । नापि स्वतन्त्रपुरुषप्रणीतत्वं, पठ¬मानवेदभारतयोस्तदभावात् । तज्जातीयः स्वतन्त्रपुरुषप्रणीत इति चेत्, तर्हि पठ¬मानभारतं व्यासस्य न ममेति कथं स्यात्, स्वातन्त्र्यञ्च यद्युच्चारणव्यक्तौ तदा ममाप्युच्चारणसमान्ये न व्यासस्यापि । किञ्च स्वतन्त्रपुरुषप्रणीतजातीयत्वं यदि साध्यते तदाद्यभारते स्मृतौ च वाक्यत्वमनैकान्तिकं, न हि तज्जातीयं स्वतन्त्रपुरुषप्रणीतमिति साध्यमनिर्धारितविशेषं जीवी क्वचिदस्तीति वदिति चेत् । न । पठ¬मानभारते व्यभिचारात् । अथार्थं प्रतीत्य तदर्थपरतया प्रतिसन्धीयमानपदत्वं पौरुषेयत्वं तस्य प्रथममावश्यकत्वात्, अतएवानुच्चारितोऽपि सौ मौनिश्र्लोकः पौरुषेय इति चेत् । न । अर्थज्ञानवताध्यपकेन सिद्धसाधनात्, अन्यथा पठ¬मानवेद-भारताभ्यां व्यभिचारात् । अत एव वेदत्वं स्वतन्त्रपुरुषप्रणीतवृत्ति वाक्यवृत्तिधर्मत्वात् भारतत्ववदिति निरस्तम् । स्वतन्त्रप्रणीतत्वं हि वाक्यार्थगोचरयथार्थज्ञानचिख्यापयिषयोच्चरणं तथा च

तथाविधाध्यापकेन सिद्धसाधनम् । एतेन वक्तृत्वानुवक्तृत्वयोर्भेदस्य लोकसिद्धत्वात् सवक्तृकत्वं साध्यमिति निरस्तं । नापि सजातीययोच्चाणानपेक्षोच्चारणं पौरुषेयत्वं पठ¬मानवेदे बाधात् भारते व्यभिचारात् । उच्यते, शब्द-तदुपजीविप्रमाणातिरिकप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानजन्यप्रमाणशब्दत्वं वेदत्वम्, ईश्र्वरीयप्रमायाः अजन्यत्वात्, वेदार्थस्यानुमानादिविषयत्वेऽपि अनुमानादेर्वेदोपजीवकत्वात् । स्मृतीनां भारतादिभागस्य च वेदसमानार्थकत्वेऽपि शब्दजन्यधीजन्यत्वात् वेदार्थं प्रतीत्य तत् प्रणयनात् । सजातीयोच्चारणनपेक्षोच्चारितजातीयत्वं पौरुषेयत्वं, आद्यभारतेऽपि तज्जतीयत्वान्न व्यभिचारः । अथवा वेदत्वं सजीतीयोच्चाणानपेक्षोच्चरितवृत्ति प्रमाणतावच्छेदकवाक्यवृत्तिधर्मत्वात् स्मृतित्ववत् । यद्वा वेदाः शब्दाजन्यवाक्यार्थगोचरयथार्थज्ञानजन्याः प्रमाणशब्दत्वात् भारतवत् । न च पठ¬माने वेदे बाधः भारते मन्वादिस्मृतौ च व्यभिचारः तेषां द्विकर्तृकत्वात् तादृशज्ञानजन्यजातीयत्वं वा साध्यं, तवाप्येतदभावादेव वेदेऽपौरुषेयत्वव्यवहारः । नन्वप्रयोजकमिदं

वाक्यार्थगोचरयथार्थज्ञानपूर्वकत्वमेव शब्दप्रमाण्ये तन्त्रं न तु तादृशज्ञानस्य शब्दाजन्यत्वमपि गौरवात् , अन्यथा वेदेऽपि तव द्विकर्तृकत्वेन प्रमाण्यं स्यात् लोके तथा दर्शनात्, एवञ्च अनादिमीमांसासिद्धन्यायेनावगततात्पर्यात् वेदार्थं प्रतीत्य पूर्वपूर्वाध्यपकेन उच्चरिताद्वेददुत्तरोत्तरस्याप्यध्ययनतदर्थप्रतीतिरित्यनादितैवात: किं स्वतन्त्रपु#ुरुषेण तत्प्रयोजनस्य परतन्त्रादेव सिद्धे: । किञ्च पूर्वकलो न वेदशून्य इत्युद्देश्यप्रतीतेरसिद्धे: नांशत: सिद्धसाधनं, तथा पूर्वकालीनं वेदाध्ययनं गुर्वध्ययनपूर्वकं अध्ययनत्वात् इदानीन्तनाध्यायनवत् । न च लिप्यनुमितवेदाध्ययनेन व्यभिचार:, लिपेरध्ययनपूर्वकत्वात् । न चैवं भारताध्ययनमपि तथा स्यात्, तस्य भारतादावेव व्यासादिकर्तृकत्वेन कथनादिति । उच्यते । वेदप्रामाण्याधीनं तत्प्रामाण्यमित्यत्माश्रय: । न च पूर्ववेदप्रामाण्याधीनमुत्तरवेदप्रमाण्यमिति व्यक्तिभेदमादाय नात्माश्रय इति वाच्यम् । एवं तत्पूर्वस्यापि तत्पूर्वप्रामाण्यात् प्रामाण्यमित्यनवस्थानात् । अनादित्वादयमदोष इति चेत् । न । मूलभूतप्रमाणान्तराभावात् अन्धपरम्परापातात् । स्वत: प्रमाणं वेद एव सर्वत्र वेदे मूलमिति चेत् । न । सर्वेषामेव आचारात् स्मृति: स्मृतेराचार इत्यत्र विश्वासवीजपरानपेक्षमू#ूलभूतप्रमाणाभावादन्धपरम्पराभयेन तत्र वेदमूलकत्वकल्पना । अनादिमहाजनपरिग्रहादनादिवेदप्रवाहप्रामाण्यावधारणेऽपि तन्निर्वाहकेतरानपेक्षमूलभूतप्रमाणाभावेनानाश्वास एव अन्यथा स्मृत्याचारयोरप्येवं प्रमाणण्यावधारणे प्रमाणमूलकत्वकल्पना न स्यात् । तस्मादाश्वसवीजपरानपेक्षेश्वरप्रत्यक्षमूलकत्वादेव वेदस्य प्रामाण्यं महाजनप्ररिग्रहादवधर्यते । एतेनानुमानमपि निरस्तम् । मूलभूतप्रत्यक्षं विना वेदप्रामाण्यानुपपत्त्या साध्याभावसिद्धौ बाधात् । ननु वेदो न पौरुषेय: अस्मर्यमाणकर्तृकत्वादिति बाधकमस्त्विति चेत् । न । कपिल-कणाद-गौतमैस्तच्छिष्यैश्चाद्यपर्यन्तं वेदे सकर्तृकत्वस्मरणस्य प्रतीयमानत्वात् । न च मूलभूतानुभवाभावात् स्मरणानुपपत्ति:, पौरुषेयत्वानुमानादेवानुभवात् । अस्मरणमेव तत्र बाधकमिति चेत् ।न । एवं सत्यस्मरणाननुभवयोरन्योन्याश्रयात् । अग्रे तदर्थस्मरणाभावेऽपि प्रमाणस्यानुभावकम् । *तस्मात्तपस्तेपानाच्चत्वारो वेदा अजायन्त ऋच: सामानि जज्ञिरे* इति कर्तृश्रवणात् *प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते* इत्यादिकर्तृस्मरणाच्च । पौरुषेयत्वे बाधकं विना अर्थवादमात्रत्वस्य वक्तृमशक्यत्वात् । *स्वयम्भूरेष भगवान् वेदो गीतस्त्वया पुरा । शिवाद्या ऋषिपर्यन्ता: स्मर्त्तारोऽस्य न कारका:* इति महाभागवतपुराणीयवाक्यस्य श्रुतिविरोधेनान्यच्च तात्पर्यात् । न च कार्यपरमेव प्रमाणं, कर्तृस्मरणस्य सर्वत्राविध्यर्थत्वात् सकर्तृकत्वार्थवादस्य स्वर्ग-नरकार्थवादस्येव *ईश्वरमुपासीत* इति विधिशेषत्वाच्च । साधयिष्यते सिद्धार्थस्य प्रामाण्यम् । न चैवमानन्दोऽपीश्वरे स्यादिति वाच्यम् । तत्र मानान्तरविरोधात् । पुरुषस्य भ्रम-प्रमादादिभूयिष्ठत्वेन वेदे नाश्वास इति चेत् । न । धर्मिग्राहकमानेन नित्यसर्वज्ञत्वेन सिद्धे तत्र दोषाभावादिति ।

# शब्दनित्यतावादपूर्वपक्ष:

ननु तथाप्यप्रयोजकं पौरुषेयत्वानुमानं नित्यनिर्दोषत्वेनैव तत्प्रामाण्योपपत्तेरिति चेत् । न । वर्णानां अनित्यत्वेन तत्समूहस्य सुतरामनित्यत्वात् । न च तदसिद्धं, तथाहि वर्णात्मक: शब्दोऽनित्य: समवेतत्वे सत्युत्पत्तिमत्त्वात् घटवत् । न च हेत्वसिद्धि:, उत्पन्नो गकार: हट्टायामुत्पद्यमानोऽस्ति कोलाहल इति प्रत्ययात् । न च व्यञ्जकाभावात् प्रागनुपलब्धस्योपलब्धिमात्रं तस्य, उत्पन्नो गकार इति प्रत्ययात् । न चायमौपाधिक:, अन्योत्पत्तावगृह्यमाणायामपि तदनुभवात् । न च स्मर्यमाणारोप:, बाधकाभावात् । अन्यथा घटोत्पत्तिरपि न सिद्ध्येत् ।

यत्तु श्रोत्रानुविधानात् पदं श्रृणोमीत्यबाधितानुव्यवसायात् श्रोत्रादन्येन ग्रहीतुमशक्यत्वाञ्च श्रोत्रग्राह्यैवानुपूर्वी सा च धममानकालीनप्रागभावप्रतियोगित्वं टस्येति प्रागभावप्रतियोगित्वमुत्पत्तिमत्त्वं वर्णस्य प्रत्यक्षमिति, तन्न, घज्ञानानन्तरज्ञानविषयत्व टस्यानन्तर्यं तयोरानू#ुपूर्वी सा च मनसैव गृह्यते घटपटज्ञानयोरिव । तदुपनीता च श्रोत्रविषय: । ननु स एवायं गकार इति प्रत्यभिज्ञाबाधितमिदमित्यैकैका एव गकारादिव्यक्तय: । यद्यपि प्रत्यभिज्ञायां नित्यत्वं न विषयस्तथापि नाशकत्वाभिमतशब्दान्तरादीनां अन्तरासम्भवेऽपि तावत् कालीनतां गकारस्य गृह्णातीति *तावत्कालं स्थिरञ्चैनं क: पश्चान्नाशयिष्यतीति पराभिमताशुविनाशित्वतिरेकान्नित्यतायामेव पर्यवस्यति । न च धर्मिणो गकारस्य भेदेऽपि एकजातीयत्वेन प्रत्यभिज्ञा, तथा सति तज्जातीयोपमिति: स्यान्न तु स एवायमिति । अथ तारत्व-मन्दत्व-विरुद्धधर्माध्यस्तविषयत्वेन सा न प्रमाणम् । न च तारत्वादीनां स्वाभाविकत्वं विरुद्धत्वञ्चासिद्धं, मन्दस्तारो गकारस्तारान्मन्दोऽन्य इत्यनन्यथासिद्धप्रत्यक्षात् तत्सिद्धे: । न ह्यपां शैत्य-द्रवत्वे स्वाभाविके इत्यत्र प्रत्यक्षादन्यत् प्रमाणम् । तत् किं यो यद्गतत्वेन भासते स तद्धर्म एव तथा सति रक्त: पट: लोहित: स्फटिक: इत्यादावपि तथा स्यादविशेषात्, न, रक्तत्वादीनामन्यधर्मत्वस्थितौ स्फटिकादीनाञ्च तद्विरुद्धधर्मत्वे स्थिते जपाकुसुमादेरन्वय - व्यतिरेकानुविधानाद् बाधेन तत्र भ्रान्तत्वात् । न चेह तारत्वादेरन्यधर्मत्वेनोपस्थिति: । नापि गकारादीनां तद्विरुद्धधर्मवत्त्वम्, नाप्यन्यस्य तारत्वादिधर्मिणोऽनुविधानम् । न चावश्यं स्वीकृतवायोरेव धर्मास्तारत्वादयोगकारादिगतत्वेन भासन्ते इति वाच्यम् । स्पर्शाग्रहे त्वचो व्यापाराभावेन त्वचा तदग्रहात् । न च श्रवसा तद्गह:, अवायवीयत्वेन वायुमात्रधर्माग्राहकत्वाच्चक्षुर्वत् । तारत्वादयो वा न वायुधर्मा: श्रवणत्वात् कादिवात्, वायुर्वा न श्रवणमात्रग्राह्यधर्मोमूत्तत्वात् पटवत्, अतएव न तारत्वादयो वायुधर्मध्वनिधर्मा: वायुधर्मस्य ध्वनेरग्रहात् । न च ध्वनिरूप: शब्दो नभोवृत्तिरेव तथा सति तद्धर्मतारत्वादिग्रह: श्रवसेति वाच्यम् । तारोऽयं गकार इत्यत्र ध्यनीनामस्फुरणं, तत्कारणाभावाच्च । न च व्यक्त#ाय विना जातिस्फुरणं, तस्या व्यक्तिसमानसंवित् संवेद्यत्वात् । न च स्मर्यमाणतारत्वाद्यारोप:, बाधकाभावात् प्रथमतस्तारत्वाद्यग्रहप्रसङ्गाच्चेति । मैवं । तारत्वादयो न गकारादिजातय: गत्वादिना सङ्करप्रसङ्गात् । न च नानैव तारत्वं, ताराकरानुगतप्रत्ययाभावप्रसङ्गात् । न च सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकशब्दवृत्तिजातित्वेन नानातरत्वेष्ठनुगम:, तदप्रतिसन्धानेऽपि तारत्वानुगतप्रत्ययात् । तारत्व-मन्दत्वे च न शब्दवृत्तिजाती सप्रतियोगिकत्वात् । नापि तारत्व-मन्दत्वयोर्विरोध:, य एव गकारस्तार आसीत् स एवेदानी#ा#ं मन्द इति समयभेदेन वक्तृभेदेन च तयोरेकत्वप्रतीते: । तारोऽयं न तारतरस्तारान्मन्दोऽन्य इति भेदप्रतीतिरस्तीति चेत् न, धर्मिणोऽभेदे भासमाने विशिष्टधर्मिभेदप्रतीतेर्धर्मभेदविषयत्वात् । एकत्र घटे लोहितोऽयं न श्यामइदानीमिति प्रतीतिवत् । न च तीव्रेण गकारेण मन्दगकाराभिभावात्*

*तयोर्भेदः न हि तदेव तदभिभावकं,तस्यैव तेनैव तदैव ग्रहणाग्रहणयोर्विरोधात् इति वाच्यम् । तारत्वव्यञ्जकवायोर्बलवत्त्वेन मन्दत्वव्यञ्जकवाय्वभिभावात् मन्दत्वस्याग्रहणात् । सन्तु वा तार-मन्दरूपादयोभिन्नाएव गकारास्तत्प्रत्ययभिज्ञाने बाधकाभावात् । तस्मात् वायुधर्मा एव तारत्वादयः शब्दगतत्वेन भासन्ते दर्पणधर्मा इव सुखादौ तद्ग्रहणञ्च स्पर्शपुरस्कारेण कर्णशष्कुलीत्वगिन्द्रियेण तार-मन्दजनकवायूनं त्वयाप्युत्कर्षापकर्षस्योद्भूतस्पर्शस्य च स्वीकारात् श्रोत्रेणैव वा । चक्षुरादेर्यन्न वायुधर्मग्रहस्तत्रायोग्यत्वमुपाधिः, अन्यथा श्रोत्रेण स्वगुणो न गृह्येत इन्द्रिये तथा दर्शनात्, चक्षुर्वा न पार्थिवरूपग्राहकं अपार्थिवेन्द्रियत्वात् रसनवत् इत्यद्यपि स्यात् । अथ योग्यो योग्येन गृह्यते स्वगुणः परगुरणो वा, योग्यता च फलबलेन कल्पते, तर्हि श्रोत्रस्यापि वायुधर्मग्रहे तुल्यम् । न च तारो गकार इत्यत्र वायोरप्रतीतिः, वायुत्वेनाप्रतीतावपि तारत्वादिनैव तत्प्रतीतेः, यथा अग्नित्वेनप्रतीतावपि अयोगोलके लोहित इति प्रतीतिः । ननु वायु-शब्दयोस्त्वचा श्रोत्रेण वा ग्रहे केन तारोऽयं गकारइत्यारोप इति चेत्, न, उभयेन्द्रियग्राह्ययोरसंसर्गाग्रहात् संसर्गव्यवहारः । अस्तु वा त्वगिन्द्रियोपनीतस्य श्रोत्रेणारोपः श्रोत्रेणैव वा तारत्वग्रहोऽपीत्युक्तं, उत्पत्तिमत्त्वञ्चासिद्धं तत्प्रतीतेः श्रुतपूर्वोऽयं गकार इति प्रत्यभिज्ञानबाधितत्वात् । ननु प्रत्यभिज्ञैव तया बाधिता गत्वजात्यौपधिकोऽभेदप्रत्ययो गकारे सम्भवतीत्युक्तमिति चेत्, न, गत्वजातेरसिद्धेः भेदे भासमाने ह्यभेदप्रतीतिर्जातिमालम्बते । न च गकारभेदप्रतीतिरस्ति, तारत्व-मन्दत्वे अपि न भेदहेतू य एव तारः स एवेदानीं मन्द इति प्रत्यभिज्ञानात्, गकारानित्यत्वेऽपि तथा सम्भवतीति चेत्, तर्हि नित्यत्वेऽपि कर्णशष्कुलीत्वगिन्द्रियोपनीतवायुधर्मोत्पत्तेरुपाधित्वं सम्भवति । न च वायोरप्रतीतिः, उत्पन्नत्वेनैव तत्प्रतीतेः लोहितत्वेनेव जपाकुसुमस्य स्फटिके ।*

अस्तु वा प्रागनुलभ्यमानत्वे सति उपलभ्यमानत्वेन उत्पन्नस्य सादृश्येन स्मृतोत्पत्तिमत्त्वारोपः । न चैवं घटादावपि नोत्पत्तेः सिद्ध्येदिति वाच्यम् । कुलालव्यापारानन्तरमनुभूयमानधटस्य तद्व्यापारात् प्रागनुभूयमानेन घटेन नाभेदोभासते किन्तु भेद एवेति तत्र प्रागसत्त्वे सत्त्वं सिध्यति, गकारे तूत्पत्तिप्रतीत्यनन्तरं कण्ठताल्वादिव्यापारात् पूर्वमनुभूयमानगकारेणाभेदप्रत्ययात् पूर्वमनुभूयगकारेणाभेदप्रत्ययात् दीपवत् स व्यञ्जक एव । अथ शब्द उत्पद्यते उत्कर्षवत्त्वे सति अपकर्षवत्त्वात् माधुर्यवत् अतएवानित्यत्वमिति चेत् । न । तारत्व-मन्दत्वयोरुत्कर्षापकर्षयोर्गकारे पूर्वन्यायेनासिद्धेः सिद्धौ वा जातिसङ्करभयेनोत्कर्षापकर्षयोर्जात्योः रसत्व-शब्दत्वव्याप्ययोर्नानात्वेन रसशब्दसाधारण्याभावात् । अतएव सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकसामान्यमुत्कर्षः तत्प्रतिबध्यसाक्षात्कारविषयतावच्छेदकसामान्यमपकर्ष इति साधारणो हेतुरपास्तः । तारत्वादेर्गकारजातित्वासिद्धेः । साधनावच्छिन्नसाध्यव्यापकपूत्रतगुणतत्वस्याश्रौत्रत्वस्य चोपाधित्वात् अप्रयोजकत्वाच्च । न हि कारणाधीन एव उत्कर्षोऽपकर्षश्च, परममहति परमाणौ च परिमाणे प्रत्येकं सत्त्वात् । न चोभयस्यैकत्र सत्त्वं कारणप्रयोज्यं, एकैकवद्द्वयोरपि प्रत्येकमेकत्वात् । स्यादेतत् । श्रोत्रव्यापारानन्तरमिदानीं श्रुतपूर्वो गकारो नास्ति विनष्टः कोलाहल इति प्रतीतेः प्रत्यक्षमेव शब्दानित्यत्वं विनाशिभावत्वेनोत्पत्तिमत्त्वानुमानद्वा, प्रत्यक्षप्रतियोगिकाभावत्वेन हि प्रत्यक्षत्वं ध्वंसस्य घटध्वंसवत् न तु विनाशग्रहे प्रतियोगिसमवायिप्रत्यक्षत्वं तन्त्रं धर्माभावस्य प्रत्यक्षत्वापत्तेः । तदिन्द्रियाग्राह्येऽपि प्रतियोगिसमवायिनि गन्ध-रसाभावयोग्रहणाच्च । नोभयं गौरवात् स्मृतघटसंयोगध्वंसप्रत्यक्षत्वापाताच्च । न च प्रतियोगियोग्यत्वस्य तन्त्रत्वे वायुस्पर्शध्वंसोऽपि प्रत्यक्षः स्यात् इति वाच्यम् । आश्रयनाशजन्यस्य तस्य ग्राहकेन्द्रियसन्निकर्षाभावात् । किञ्च यस्य सत्त्वं यत्रानुपलब्धार्थः । अतएव पृथिवीत्वाभावो जलीयपरमाणौ न प्रत्यक्षः प्रत्यक्षश्च वायौ रूपाभावः । अस्ति च तथा शब्दे तस्य सत्त्वे समवधाने च प्रतीतिप्रसङ्गात् । निरधिकरणाभावप्रतीतिर्नास्तीति चेत्, न, इहेदानीं शब्दो नास्तीति प्रतीतेः । तस्मात् यत्राधिकरणे देशे समये वा प्रतियोग्यत्र वर्तते तत्र तदभावो निरूप्यते । अतएव सद्भ्यामभावो निरूप्यते इत्युक्तं, शब्दाभावस्य च स्वतएवेन्द्रियसन्निकृष्टत्वात् नाश्रये सन्निकर्षापेक्षा । इन्द्रियविशेषणतया नाभावग्रहणमिति चेत् । न । अयोग्यत्वस्यापधित्वात् । अन्यथा गुणस्य संयुक्तसमवायेन ग्रहणदर्शनात् न समवायेन शब्दग्रहः स्यादिति । मैवं । सत एव हि शब्दस्य व्यञ्जकविरहादनुपलब्धिमात्रं न तु ध्वंसः, तत्तद्वयापेतरसकलतदुपलम्भकसमवधाने तदनुपलब्धिरूपयोग्यानुपलब्धेरभावात् । प्रतियोग्युपलम्भकव्यञ्जकवायुस्पर्शध्वंसोपाधिकैव । वायुर्नोत्पादकः किन्तु व्यञ्जकः इत्यत्र किं विनिगमकमिति चेत् । न । इदानीं श्रुतपूर्वो गकारो नास्ति विनष्टः कोलाहलइति प्रतीत्यनन्तरं पुनः श्रवणे श्रुतपूर्वोऽयं गकारः पुनः स एवायं कोलाहल इति प्रत्यभिज्ञानमेव, घटध्वंसप्रतीत्यनन्तरञ्च स एवायं घट इति न प्रत्यभिज्ञानमिति तत्र विनष्टप्रतीत्याध्वंस एव सिध्यति । अत एव तारत्व-तारतरत्व-मन्दत्व-मन्दतरत्वप्रतीतीनां भ्रमत्वकल्पनमित्यपास्तम् । एतासु सतीष्प्यभेदप्रत्यभिज्ञानात् । स्यादेतत् । शब्दः प्रयत्नसाध्यः तदनभिव्यञ्जकत्वं हि इन्द्रियसम्बन्धप्रतिबन्धकापनायकत्वादिन्द्रियसन्निधापकत्वाद्वा कुड¬ोत्सारणेनेव पटादीनां, तदुभयमपि शब्दे न सम्भवति नित्यसमवेतत्वेनावरणापनयन-सन्निधानपनयोरभावात् । नापि श्रोत्रसंस्कारात्, इन्द्रियसंस्कारस्य उन्मीलनालोकादेः सकृदिन्द्रयसम्बन्धयोग्यसर्वार्थोपलब्ध्यनुकूलसंस्कारजनकत्वं दृष्टं तद्वद्वायुरपि सकृदेव सर्वशब्दोपलब्ध्यनुकूललं श्रोत्रे संस्कारमादध्यात्, तथाच सर्वशब्दोपलब्धिः स्यात् । तदुक्तं *सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रकाशयेत् । घटायोन्मीलितं चक्षुः पटं न हि न बुध्यते* । अथान्वय -व्यतिरेकाभ्यां कार्ये प्रतिनियतजनकजन्यत्ववच्छब्देऽपि प्रतिनियतव्यञ्जकव्यङ्ग्याः एकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वात् घटैकत्वपरिमाणवत् ।न चावयवसंयोग-बहुत्वव्यञ्जकाव्यङ्ग्येनावयविनोत्पलत्वव्यञ्जकदीपाव्यङ्ग्येन तन्नीलिम्ना घटवृत्तिपृथक्त्#ावव्यञ्जकाव्यङ्ग्येनैकत्वेन वा व्यभिचारः । अवयवसंयोगाऽवयविनोर्नीलत्वोत्पलत्वयोश्चाव्याप्यव्याप्यवृत्तिनोरुत्पलत्वस्य चाधिकवृत्तित्वेनैकावच्छेदेन वृत्त्यभावात् । बहुत्व-पृथक्त्वव्यञ्जकव्यङ्ग्यत्वं, अतएव नीला बलाकेत्यत्र

रूप-परिमाणयोरद्र्धनिखातवंशसङ्ख्या-परिमाणयोर्वा न व्यभिचार इति । मैवं । वर्णाः प्रतिनियतव्यञ्जकव्यङ्ग्याः आश्रयेण सह समानेन्द्रियाग्राह्यत्वात् गन्धवत् इत्यापाततः सत्प्रतिपक्षत्वात् ।

वस्तुतस्तु अनन्यथासिद्धप्रत्यभिज्ञानबलेननाभेदसिद्धौ प्रतिनियतव्यञ्जकव्यङ्ग्यत्वसाधकस्यै बलवत्त्वं, शब्दस्य शब्दजनकत्वञ्च शब्दनाशकत्वं वीचीतरङ्गन्यायेनोत्पत्तिकल्पनञ्च कल्पनमेव शब्दस्य शब्देऽजनकत्वादनाशकत्वाञ्च अन्त्याद्यशब्दवत् । एतेन सामान्यवत्त्वे सत्यस्मदादिवहिरिन्द्रियजप्रत्यक्षत्वात् इत्यपास्तं, प्रत्यभिज्ञानबाधात् शब्दत्व-गत्वादेरसिद्धेश्च, तस्माच्छब्दो नित्यः व्योमैकगुणत्वात् तत्परिमाणवत्, श्रोत्रग्राह्यत्वात् शब्दत्ववत्, विशेषगुणान्तरासमानाधिकरणैकवृत्तिगुणत्वात् समयपरिमाणवत्, पृथिवीतरनित्यभूतविशेषगुणत्वात् अपाकजत्वे सति नित्यैकसमवेतत्वात् जलपरमाणुरूपवत्, अव्यासज्यवृत्तित्वे सति अनात्मविभुगुणत्वात् कालपरिमाणवत्, विपक्षे बाधकञ्च प्रत्यभिज्ञानमेवेति ।

## शब्दानित्यतावादसिद्धान्तः

अत्रोच्यते । गकारादिव्यक्तयोनैकैकाः,अस्ति च शुक-सारिका-मनुष्यप्रभवेषु स्त्री-पुंसतद्विशेषप्रभवेषु च गकारादिषु स्फुटतरवैलक्षण्यात् स्वरूपतोभेदप्रथा इक्षुक्षीरादिमाधुर्यवत् । न चेयमौपाधिको भेदप्रतीतिः, न हि विदितकुङ्कुमस्य कुङ्कुमारुणा तरुणीति वत् स्त्री-पुंसप्रभवत्वमानुभविकमुपाधिः, इन्द्रियासन्निकर्षण स्त्री-पुंसादिभेदमविदुषोऽपि शब्दभेदप्रत्ययात्, यतोऽनुमापयन्ति शुकशब्दोऽयं स्त्रीशब्दोऽयमित्यादि अन्यथान्योन्याश्रयात्, तत्प्रभवत्वे ज्ञाते भेदप्रत्ययस्तस्माच्च तदनुमानमिति । न च कृपाणान्वय-व्यतिरेकानुविधानात् कृपाणे मुखदीर्घत्ववत् औपपत्तिकमौपाधिकत्वं, अन्यानुविधानाभावात् । अथ व्यञ्जकावायोरेव वैलक्षण्यं शुकादिगकारगतत्वेन भासते वायोरुपलब्धिस्तेनैव रूपेणेति चेत् । न । गकारगतत्वे बाधकाभावात् । न चाभेदप्रत्यभिज्ञानं बाधकं, न हि य एव शुकशब्दः स एव स्त्रीशब्द इति प्रत्यभिज्ञानं, अन्यथा तेषु भेदज्ञानाभावेन वक्तृविशेषानुमानं न स्यात् । न चाभिव्यञ्जकवायोरेव वैलक्षण्यं शुकाद्यनुमापकं, तस्य गकारावृत्तित्वात् तत्र चारोपे अनुमितेभ्रान्तत्वापातात् । तस्मात् यथा कृष्णा गौः शुक्ला गौरिति भेदे भासमाने गकारानुगतप्रतीतिर्गोत्वमालम्बते तथा शुकादिगकारेषु भेदे भासमानेऽयं गकारोऽयमपि गकार इति बुद्धिर्गत्वमालम्बते इति प्रत्यभिज्ञा च भेदप्रथा चोपपद्यते । किञ्च गत्वादिकं यदि न जातिस्तदा कोलाहलप्रत्ययो न स्यात् तथा हि नगरादौ बहुभिर्वर्णानामेकदोच्चारणे दूरस्थेनानभिव्यक्तगकारादिवर्णविभागं कोलाहलमात्रं श्रूयते ।न च तत्र वर्णान्यस्य ध्वनिरूपस्य शब्दस्य श्रुतिः सम्भवति, तदभिव्यञ्जकभेरीताडनादेरभावात् । न च वर्णाभिव्यञ्जका एव ध्वनिव्यञ्जकाः, सन्निधानेऽपि श्रूयमाणे वर्णे तच्छ्रवणप्रसङ्गात् । न च वर्णाभिव्यञ्जकवायुभिरेव दूरे ध्वनिमात्रमभिव्यज्यते, कव्यञ्जकस्य गव्यञ्जन इव वर्णव्यञ्जकस्य ध्वनिव्यञ्जनेऽसामर्थ्यात् तत्समर्थशङ्खादेरभावाच्च । न च तत्र शब्दत्वमेवप्रतीयते न शब्दः, व्यक्त्यग्रहे जात्यग्रहात् । न चाभिव्यञ्जको वायुरेव कोलाहलत्वेन प्रतीयते, शब्दत्वेन प्रत्ययात् सन्निधावपि तथा प्रत्ययप्रसङ्गाच्च । गकारादिग्रहेऽपि तेषां परस्परभेदाग्रहात् कोलाहलधीरिति चेत्, न, तेषु वैधर्म्याभावात् तदभावेऽन्योन्याभावस्याभावात् स्वरूपग्रहणात् समीपे बहुगकारेषु भेदाभावेन तदग्रहे कोलाहलधीप्रसङ्गाच्च । अनेकवर्णोच्चारणस्य तद्धेतुत्वे दूरेऽपि तदप्रत्ययापत्तेः । तस्मादवश्यं गत्वादिजातिरूपेया यदग्रहे गकारादिग्रहेऽपि कोलाहलबुद्धिव्यपदेशौ । अस्ति च शब्दस्य कोऽपि च जातिविशेषः श्रोत्रग्राह्यः यस्मात् प्राच्यादिदिग्देशविशिष्टशङ्खप्रभवत्वमनुमीयते, अव्यपदेशस्यत्वेऽपि इक्षुक्षीरादिमाधुर्यावान्तरवत्तत्सत्त्वात् । अन्यथा दिग्दशविशिष्टशङ्खादीनां ग्रहे श्रोत्रश्यासामर्थ्यात् तत्प्रतीतिर्न स्यादेव । तथापि गत्वादिना परापरभावानुपपत्त्या शुकादिगकारादिषु न जातिविशेषा इति चेत्, शुककारादिषु कत्वादिव्याप्या नानाजातिर्भिन्ना तया प्रत्येकं शुककारादिषु एका जातिरस्ति शुकप्रभवत्वाद्यनुमापिका तद्व्यवहारकारिका वा, गत्वादिना सङ्करप्रसङ्गात्, गत्वन्तु न नाना अननुगतत्वेन ततोऽनुगतव्यवहारानुपपत्तेः । अत एव तारत्वमपि गत्वादिव्याप्यं नाना न तु गत्वं, तन्निश्चयेऽपि गत्वसन्देहश्च व्याप्यतावच्छेदकत्वेनानुगतेन नानातारत्वेष्ठनुगतव्यवहारसम्भवात्, तदज्ञाने व्यवहारासिद्धेः । तारत्व-मन्दत्वे न जाती सप्रतियोगिकत्वात् इति चेत्, न तारत्व,तारतरत्वादयउत्कर्षादिरूपा जातिविशेषा एव ते चाश्रये गृह्यमाण एव गृह्यन्ते न तूत्कर्षावध्यपेक्षाः यथा मधुरतरत्वादय उत्कर्षव्यवहारं इतरसापेक्षाः कुर्वन्ति तथा मन्दाद्यपेक्षया तारत्वादिव्यवहारं, उत्कर्षस्तु जातिरूपादन्योऽसम्भावित एव गकारे तु नैवं, अनन्यथासिद्धभेदप्रत्ययबलेन वक्तृविशेषानुमानबलेन च तत्सिद्धेर्गत्व-कत्वव्याप्यतन्नानात्वस्वीकारात् ।

तवापि वायुवृत्तित्वे शुकादिककार-गकारादिव्यञ्जकवायूनां विजातीयत्वं वाच्यं तथा च ककारव्यञ्जकवायुत्वव्याप्यं यदि शुकवर्णाभिव्यञ्जकवायुत्वं तदा शुकगकारव्यञ्जकवायौ न स्यात्,अथ व्यापकं तदा सर्व एव कव्यञ्जकवायवः शुकवर्णाभिव्यञ्जकवायवः स्युस्तस्माद्वायुवृत्तित्वेऽपि तासां नानात्वमावश्यकं । अथास्तु स्त्री-पुंसादिगकारभेदस्तथापि यावद्वक्तृभेदमनन्ता एव नित्या वर्णाः प्रत्यभिज्ञानादिति चेत्, अत्युत्पाद-विनाशप्रतीतौ सत्यामपि स एवायं गकार इति प्रत्यभिज्ञा, अस्ति हि तदनन्तरमप्युत्पाद-विनाशप्रथा । न चोत्पादप्रतीत्यभेदप्रत्यभिज्ञयोरन्यतरस्य परस्परं विहायान्यद्बाधकमस्ति, न वानयोः परस्परं बाध्य-बाधकभावे विनिगमकं येनैकभ्रान्तत्वेनाविरोधः स्यात् । कथं वा भेदाभेदज्ञानयोरन्यत्रावधारितं परस्परप्रतिबन्धकत्वं परिभूय प्रथमं तयोरेकसत्त्वेऽप्यपरोत्पत्तिप्रसङ्ग इति सङ्कटप्रविष्टत्वेन प्रत्यभिज्ञानं शब्दनित्यत्वे प्रमाणयितुं न शक्यते । नन्वेवमुत्पत्ति । नन्वेवमुत्पत्तिमत्त्वादिनाप्यनित्यत्वसिद्धिः कथं, इत्थं, उत्पादादिबुद्धि-प्रत्यभिज्ञयोरप्यवश्यं विषयभेदः, एकविषयत्वे विरोधेनैकानन्तरमपरानुत्पत्तिप्रसङ्गात् । एवञ्च भेदे भासमाने प्रत्यभिज्ञायाः सजातीत्वं विषयो न व्यक्त्यभेदः । न चैवं तज्जातीयोऽमिति स्यात् न तु सोऽयमिति वाच्यम् । तज्जातीयत्वप्रतीतेरपि सोऽयमित्याकारदर्शनात् यथा सैवेयं गाथा तदेवेदमौषधं बहुभिः कृतं मयापि प्रत्यहं क्रियमाणमस्तीत्यादौ । न हि तावद्वर्णमात्रमानुपूर्वी, जरा-राज-नदी-दीनादिषु तन्नानात्वात्, किन्तु तदुच्चारणानन्तरमुच्चारणं तज्ज्ञानानन्तरं ज्ञानं वा तच्च नानेति तद्वती गाथापि नानैव । नचाभेदे भासमाने उत्पादादिबुद्धिरेवान्यस्योत्पादादिकमवगाहते, गाकारगतत्वप्रतीतेभ्रान्तत्व प्रसङ्गात् । न चेष्टापत्तिः, अभेदे भासमाने तद्विरुद्धधर्मवत्त्वभ्रमानुदयात् विनिगमकाभावेनोभयस्यापि यथार्थत्वाञ्च, कुतस्तर्हि

तस्या अभेदो विषयः, यत्र प्रथमं न भेदप्रथा अतएव भेदसत्त्वे तदज्ञानात् क्वचित् सा भ्रान्ता, तस्माद् यत्र भेदप्रतीतिस्तदितरबाधकाबाध्या तत्र प्रत्यभिज्ञैव न भवति भवन्ती वा तज्जातीयत्वमालम्बते, न तु भ्रान्ता, विशेषदर्शने भ्रमानुदयात् । अपि च यथा शङ्खादिध्वनीनां उत्पत्ति-विनाशप्रत्ययात् तारत्वादिविरुद्धधर्मसंसर्गाच्चानित्यत्वे सैवेयङ्गुर्जरीत्यादिप्रत्यभिज्ञा तज्जतीयत्वविषया तथा वर्णप्रत्यभिमापि । अन्यथा ध्वनयोऽपि नित्याः स्युः उत्पत्ति-विनाश-तारत्वादिप्रतीतीनां प्रत्यभिज्ञानबलेनौपाधिकत्वात् । न च वर्णेषु तारत्वेनैव भासमाना ध्वनयउपाधयः सम्भन्ति, न तु ध्वनिषु वर्णास्तज्जनककण्ठताल्वाद्यभिघाताभावादिति वाच्यम् । वर्णोच्चारणदशायामपि गुर्जरीकादिजनकानामभावात् । तस्मात् उत्पत्ति-विनाश-तारत्वादिप्रत्ययस्य प्रत्यभिज्ञानस्य च तुल्यत्वे द्वयोरपि नित्यत्वमनित्यत्वं वा । न चोभयोरपि नित्यत्वमेव, उक्तन्यायेन प्रत्यभिज्ञायास्तज्जातीत्वविषयत्वात् । किञ्च यदि व्यङ्ग्यः शब्दः स्यात् तदा बाह्यालोकाभावे घटस्येव व्यञ्जकाभावे शब्दस्यानुपलम्भात् तत्संशयः स्यात्, न त्विहेदानीं शब्दो नास्तीति निश्चयः तस्माद्वर्णो न नित्योऽनित्यो वा सत्त्वे सत्युत्पत्तिमत्त्वात्, अस्मदादिबहिरिन्द्रिय-ग्राह्यत्वे सति जातिमत्त्वात्, अस्मदादिप्रत्यक्षगुणत्वाद्वा, आत्मैकत्वप्रत्यक्षपक्षे प्रत्यक्षविशेषगुणत्वात्, व्यापकसमवेतप्रत्यक्षविशेषगुणत्वात्, अनात्मप्रत्यक्षगुणत्वात्, अव्याप्यवृत्तित्वात्, ईश्वरज्ञानञ्च न तथा, तत्प्रयोककारणाभावात्, बहिरिन्द्रियव्यवस्थाहेतुगुणत्वात्, भूतप्रत्यक्षगुणत्वात्, उत्कर्षापकर्षपशब्दप्रवृत्तिनिमित्तजातिमत्त्वाद्वेत्यादि, रसत्वादिव्याप्यजातेर्नानात्वेऽपि तादृशप्रवृत्तिनिमित्तत्वस्य साधारण्यात् । न चात्र साधनावच्छिन्नस्य पक्षधर्मावविच्छन्नस्य वा साध्यस्य व्यापकः स्पर्शवत्समवेतत्वं उपाधिः, सर्वत्र वर्णात्मकशब्दपक्षीकरणे व्योमगुणेष्ठनित्येषु ध्वनिषु साध्याव्यापकत्वात् स्पर्शवत् पदस्य पक्षमात्रव्यावर्तकत्वेन पक्षेतरत्वाच्चेति । यदा च वर्णा एव न नित्यास्तदा कैव कथा पुरुषविवक्षाधीनानुपूर्व्यादिविशिष्टवर्णसमुहरूपाणां पदानां, कुतस्तराञ्च तत्समूहरूपस्य वाक्यस्य कुतस्तमाञ्च तत्समूहस्य वेदस्येति ।

## उच्छन्न-प्रच्छन्नवादः

तथापि परतन्त्रपुरषपरम्पराधीनतया प्रवाहाविच्छेदमेव नित्यत्वं ब्रूमः इति चेत्, न, स्मृत्याचारानुमितानां शाखानामुच्छेददर्शनात् । स्यादेतत्, विवादपदमपूर्ववोधिका स्मृतिः स्मृत्यर्थानुभवजनकवेदमूला अविगी#ीत-महाजनपरिगृहीतस्मृतित्वात् प्रत्यक्षवेदमूलकस्मृतिवत्, वेदमूलकत्वञ्च वेदजन्यानुभवजन्यत्वं ज्ञानाद्वारा ज्ञायमानस्यैव वेदस्य स्मृतिहेतुतयानुमानं, कुविन्दस्येव ज्ञानादिव्यवहितस्य पटे, न तु कारणाकारणता, वेदे सत्येव तत्प्रतिसन्धाने स्मृतिप्रणयनात्, वेदार्थस्मृतिता च प्रसिद्धिसिद्धा, स्मृत्यर्थश्च स्मृतित एव उपस्थितः । न च स्मृत्यर्थबोधकवेदानुमाने स्मृत्यर्थरूपवेदार्थस्य विषयत्वात् वेदोऽनुवादकः ज्ञानान्तरोपनीतस्य विशेषणत्वेन विशिष्टबुद्धिसम्भवात्, पाककृतौ मानसप्रत्यक्षायां पाकस्य

संज्ञासंज्ञिज्ञाने संज्ञायाज्ञानयथार्थत्वे तदनुव्यवसाये भ्रमविषयस्येव, अन्यथा भ्रान्त-भ्रान्तिज्ञसङ्करापत्तिः न तु शब्दार्थोऽनुमानस्य विषयः तस्यासिद्धत्वेनाजनकता स्मृत्यव्यापकत्वात् । स च वेदो नित्यमनुमेय एवानुमितादेवार्थमवधार्य स्मृतिप्रणयनसम्भवात् । नन्वासंसारमपठितस्य न वेदत्वं उत्पत्तितोऽभिव्यक्तितो मौनिश्लोकवदभिप्रायतो वानुपूर्वीहीनवर्णमात्रस्य निरर्थकत्वात् । ज्ञानजनकसमभिव्याहारस्यानेकत्वे विशेषाननुमानाञ्चेति चेत् । न । स्मृत्यर्थज्ञापकत्वेनैव ज्ञातस्य वेदस्य स्मृत्यर्थानुभावकत्वात् । न हि शाब्दबोधे नियतपदानुपूर्वी हेतुः, व्यभिचारात् । पदस्य वर्णाविशेषानुपूर्वीनियमेऽपि तत्तद्वर्णानुपूर्वीकपदविशेषत्वेन हेतुत्वं हस्त-करादिपदानां प्रत्येकं व्यभिचारात् । किन्त्वव्यभिचारितदर्थज्ञापकत्वेन ज्ञातस्य लाघवादावश्यकत्वाच्च, तदर्थज्ञापकत्वज्ञानार्थमेव क्वचिद्वर्णक्रमस्वरविशेषाणामुपयोगः । अत एव वर्णलोपादौ कुशमानयेति सकारसन्देहे लिपावुच्चारणे वा हस्त-करसन्देहेऽपि वाक्यार्थबोधः । ननु क्रमिकपदवत्त्वं वाक्यत्वम् । न चात्र पदक्रमः, अनुच्चार्यमाणतयोच्चारणाधीनस्य युगपदनुमीयमानतया बुद्ध्यधीनस्य वा तस्याभावादिति चेत्, न हि क्रमिकपदवत्त्वं वाक्यत्वं, गौरव इत्यादावभावात् किन्तु विशिष्टार्थपरशब्दत्वं तच्चात्राप्यस्त्येव । अथानुच्चार्यमाणस्य न वाक्यत्वं न वा अर्थानुभावकत्वमिति चेत्, न, लिप्यनुमितानामपि वाक्यत्वात् अर्थबोधकत्वाच्च, लिपित #ुल्या च स्मृतिः । किञ्च वाक्यमुच्चार्यते न तूच्चारणाद्वाक्यत्वं, अन्यथा वाक्यमुच्चारयेत्यत्रानन्वयापत्तिः, अनुच्चारितमौनिश्लोकश्च वाक्यं न स्यादुच्चारणदशायाञ्च वाक्यत्वे वाक्यस्यासत्त्वमेव स्यात् एकदा तावत्पदानां उच्चारणाभावात् । न च कृत-क्रियमाण-करिष्यमाणोच्चारणस्य वाक्यत्वं, समुदाये प्रत्येकस्याभावात् । तस्मादर्थविशेषज्ञापकत्वेनैव ज्ञातादर्थविशेषधीः । अत एवास्ति वह्निलिङ्गमितिशब्दात् प्रतीतेः धूमे वह्नेरनुमानं, न तु तदर्थज्ञापकत्वेन ज्ञातात् पदादर्थज्ञानमात्रं स्यात् न तु संसर्गधीः, घटः कर्मत्वमानयनं भावना तद्बोधकमिति ज्ञानेऽपि घटमानयेतिवाक्यादिवान्वयबोधाभावात् । एवञ्चान्वयप्रकारकर्मत्वाद्युपस्थापकविभक्त्#ायदिमत्पदविशेषस्य तदुत्थापिताकाङ्क्षादेश्च ज्ञानं वाक्यार्थदीहेतुरतो न तैर्विना ज्ञापकत्वमात्रेण ज्ञातादर्थधीः, हस्त-करादिसन्देहे कुशमानयेत्यादौ विभक्त्#ायदिज्ञानादेव वाक्यार्थानुभव इति, मैवं, न हि तत्तद्विभक्त्#ायदिमत्पदविशेषत्वेन वाक्यार्थधीहेतुत्वं, अननुगमात्#्#्, किन्तु घटः कर्मत्वमित्याद्यन्वयविरोधिपदाजन्यपदार्थोपस्थितिस्तथा सा चेहाप्यस्ति । वस्तुतस्तु नानापदात् पदार्थोपस्थित्यनन्तरं वाक्यार्थबोधे तथैव सामाग्री अनुमितवेदाद्वाक्यार्थानुभवे विलक्षणैव सा स्मृत्यर्थज्ञापकत्वेनैव ज्ञातस्य स्मृत्यर्थानुभावकत्वात् धर्मिग्राहकप्रमाणेन तस्य तथैव सिद्धत्वात् । तवेश्वरस्येवाशरीरस्य कर्तृत्वे । अतएव वर्णपद विभक्त्#ायदिविशेषघटितत्वेनाज्ञातस्याखण्डस्य सखण्डस्य वा वाक्यार्थानुभावकत्वात् पदार्थस्थनीयस्तस्य वाक्यार्थस्तत्र वर्णसमूहः पदं पदसमूहोवाक्यमित्यत्रापि ततो ग्रहः प्रमाणशब्दत्वमात्रेण तस्य सिद्धेः अन्यथा क्त्#्ळप्तहेतुं विना सोऽनुभावक इत्यादौ तदसिद्धावाश्रयासिद्धिः सिद्धौ वा बाधः तेन विनैव सर्वानुपपत्तिं्त परिभूय तदनुभावकत्वस्य धर्मिग्राहकमानसिद्धत्वात् । अतएव क्वचित् स्तुति-निन्दाभ्यां कल्पितविधि-निषेधकवेदार्थमधिगत्य प्रवृत्ति-निवृत्ती । अन्यथा विधि-निषेदकानां नानाप्रकारकत्वेन विभक्त्#ायदिविशेषवत् पदस्यानुमातुमशक्यत्वात् न ततोऽर्थधीः स्यात् । तथापि वक्तृज्ञानानुमानानन्तरमिवानुमितानुमानादेव वाक्यार्थसिद्धलौकिकवाक्यवद्वेदस्यानुवादकत्वं स्यादिति चेत्, न, धर्मिग्राहकमानेन

स्मृत्यर्थज्ञापकतया ज्ञातात् सम्भूतसामग्रीकत्वेनाभावात्, अनुमानस्य व्याप्त्यादिज्ञानापेक्षितत्वेन विलम्बितत्वात् । न च वेदस्यापि योग्यतादिज्ञानापेक्षिततया विलम्बः, तन्निरपेक्षबोधकस्यैव धर्मिग्राहकमानसिद्धत्वात् योग्यतादि विशिष्टस्यैवानुमानाद्वा, एवं मङ्गलाचारस्याविगीतशि#ेष्टाचारत्वेन कर्तव्यतामनुमाय सा कर्तव्यता वेदबोधिता अलौकिकाविगीतशिष्टाचारकर्तव्यतात्वादिति तद्बोधकत्वेनानुमितवेदात् कर्तव्यताधीस्ततः प्रवृत्तिः । ननु स आचारोवेदबोधितकर्तव्यताकः तादृशाचारत्वादित्यनुमितवेदात् तत्कर्तव्यताधीः, विभक्त्#ायदिकविनानु#ामितवेदात् तत्कर्तव्यताज्ञानाभावात् मङ्गलमाचरेदित्येवंरूपस्य च वेदस्य नानुमानं तथा व्याप्त्यभावात्, तस्मात् तस्य कर्तव्यतामनुमानय तद्बोधकवेदानुमानं, प्रथमं कर्तव्यताज्ञानेऽपि वेदानुमानं अविनाभावात् । न च तत एव प्रत्यक्षवेदानुमानं, प्रत्यक्षत्वे उच्छेदानुपपत्तेः शाखान्तरवत् ।

यत्तु अष्टकाः कर्तव्याः कार्या अष्टका इत्येवं रूपमेव वाक्यमनुमेयं उपस्थितत्वात्, एवञ्च तत्रैवार्थे प्रतिपुरुषमन्यान्यवेदानुमानं, प्रत्यक्षत्वे उच्छेदनुपपत्तेः शाखान्तरवत् ।

यत्तु अष्टकाः कर्तव्याः कार्या अष्टका इत्येवं रूपमेव वाक्यमनुमेयं उपस्थितत्वात्, तत्रैवार्थे प्रतिपुरुषमन्यान्यवेदानुमानं न दोषाय एकार्थानेकपदोपस्थितौ वानेकवाक्यानुमानमेवेति, तन्न, आचारतो वेदानुमाने मङ्गलमाचरेदित्याद्यन्यतरोपस्थितौ नियमाभावात् । अनेकवेदकल्पने च स्वानुभवविरोधः, मनुस्मृतिमूलञ्चानेकं वाक्यं नावश्यकमिति कथमाधुनिकोऽनेकमनुमिनुयात् । न च स्मृत्यर्थबोधकोवेदः स्मृतिसदृश एवानुमेयः नियमतः स्मृतेरुपस्थितत्वात् इति वाच्यम् । तदर्थस्मृतेरपि नानाप्रकारकत्वात् तस्य च प्रदोषादौ अनुच्चरितवेदस्येव वेदत्वं श्रोत्रग्रहाणार्हतया च शब्दत्वं वाक्यत्वमर्थबोधकत्वादित्येतदेव युक्तं स्मृत्याचारेण चानुमितौ वेदोऽर्थं बोधयतीति पूर्वपूर्वेणानुमितवेदात् उत्तरोत्तरस्मृत्याचाराविति नान्धपरम्परा शब्दार्थशक्तिग्रहवत् स्वतः प्रमाणमूलकत्वात् । तस्मान्नित्यानुमेयत्वं वेदस्य न तूच्छेद इति । अत्रोच्यते । उच्छिन्नवेदादर्थं प्रतीत्य स्मृत्याचारयोरुपपत्तेः न सामग्र्यन्तरकल्पनं अतएव नाश्रयासिद्धिबोधो वा स्मृत्याचारानुमितवेदस्यास्माभिरभ्युपगमात् । इदानीञ्च स्मृतेरर्थं प्रतीत्याचाराञ्च कर्तव्यतामनुमाय प्रवृत्तिः । न चैवं किं वेदेनेति वाच्यम् । तुल्यत्वात् अविनाभावाच्च तत्कल्पनं तुल्यं तथाच स्मृत्याचारयोर्वेदजन्यानुभवमूलकत्वानुमानादेव पक्षधर्मताबलात् प्रत्यक्षवेदमूलकत्वसिद्धिः । अन्यथा तस्यानुभावकत्वाभावेन मूलत्वानुपपत्तेः । तस्मात् स्मृत्याचारानुमितो वेदः प्रत्यक्षोऽध्ययनविषयश्च वेदत्वात् सम्मतवत्, अन्यथा सामग्रयन्तरकल्पने गौरवप्रसङ्गः । ननु स्तुति-निन्दार्थवादेन कल्पितात् विधि-निषेधकवाक्यात् कथमर्थमवगम्य प्रवृत्ति-निवृत्ती, न हि तत्र वर्ण-पद-विभक्ति-विधिप्रत्ययक्रमविशेषाणामनुमानं सम्भवति, व्यभिचारादिति चेत्, न, स्तुति-निन्दावाक्याभ्यां प्रवृत्ति-निवृत्तिहेतुरर्थएव कल्पते । लाघावात् । न तु विधायक-निषेधकवाक्यं गौरवात् उक्तदोषाच्च, यत्र चार्थवादादेव तदर्थावगमः *तरति मृत्युमि*त्यादौ तत्र न कल्पनापि । अथ तस्याध्ययनविषयत्वे शाखान्तरवत् बहुभिर्मेघाविभिराध्यात्मिकशक्तिसम्पन्नैर्घियमाणशाखाया उच्छेदासम्भव इति चेत्, न, एकस्य न सकलशाखाध्ययने शक्तिरित्येकेनेवापरैरपि तदनध्ययने शाखोच्छेदसम्भवादेकानाधीताया अपराध्ययनविषयत्वनियमे मानाभावात् । यद्यपि वेदसहस्रशाखाविदो व्यसादयः सन्त्येव, तथाप्यध्ययनाभाव एव शाखोच्चेदः । ननु शाखोच्छेदे वर्ण-पदवाक्यहानिशङ्कया प्रत्यक्षवेदादपि वाक्यार्थ-प्रयोगयोरनिश्चये वैदिकव्यवहारमात्रं लुप्येतेति चेत्, न, श्रूयमाणमात्रस्यैव महानजपरिगृहीतत्वात् तन्मात्रबोधिताङ्गतिकर्तव्यतयैव शिष्टैरनुष्ठीयमानत्वाच्च तदर्थनिश्चयात् । न च उच्छिन्नशाखाबोधितेकर्तव्यताशङ्कया एकस्मिन्नपि कर्मण्यनाश्वसप्रसङ्गः, नानाशाखेतिकर्तव्यतापूरणीयत्वात् तस्येति साम्प्रतं, सन्ति हि तत्तत्कर्मणि नानाशाखाबोधितसकलेतिकर्तव्यताबोधनायैनमेव कालक्रमभाविनमनाश्वासमशङ्कमानैर्महर्षिभिः प्रणीता महाजनपरिग्रहीताः स्मृतयइति नानाश्वासः । अन्यथा एकस्य सकलशाखानवगमात् शाखान्तरबोधितेतिकर्तव्यतासंशयेनैकशाखातो नार्थनिश्चयः स्यात् ।

यत्तु विभक्त्यादिमत्तत्पदानां तत्समुदायानाञ्च प्रत्यक्षत्वन्तेष्ठपि कश्चिद्वेदः तत्रायं समुदायो वेद इत्यनिश्चय एव नित्यानुमेयार्थः, वेदत्वं वा तत्रानुमेयमिति, तन्न प्रत्यक्षवेदातिरिक्तवाक्ये तदभियुक्तानां महाजनानां वेदत्वाभावनिश्चयात् । अतएव वेदत्वं तत्रनानुमेयं बाधात् विशिष्य पक्षाज्ञानाञ्च धर्मवेदनाजनकत्वञ्च वेदत्वं नानुमेयं तज्जनकत्वस्य प्रत्यक्षत्वात्, नाध्ययनविषयत्वं तदभावात्, नजातिरनभ्युगमादिति ।

स्यादेतत् । स्मृत्याचारयोर्वेदमूलत्वे तत्रोच्छेदादिविवादस्तदेव त्वसिद्धं, तथा हि वेदसमानार्था महाजनपरिगृहीता च स्मृतिः स्वार्थोस्थित्यनन्तरं स्मृत्यर्थानुभावकवेदानुमाने लिङ्गं तथाच प्राथम्यात्#्#् साध्यप्रसिध्यर्थसुपजीव्यत्वाञ्च स्मृतेरेवापूर्वादिवाक्यार्थज्ञानमस्तु किं वेदन तदर्थस्य स्मृतित एव सिद्धेः अपूर्वस्यापि शब्दैकगम्यत्वेन स्मृतितोज्ञातस्य ज्ञापकत्वेनानुवादकतापत्तेश्च, सा च स्मृत्यन्तरादित्यनादिरेव स्मृतिधारावश्यिकी । अन्यथा मनुस्मृतेः पूर्वन्तवापि वेदानुमानं न स्यात् । सर्वा च स्मृतिः स्मृतिजन्यवाक्यार्थप्रमाजन्यत्वेन महाजनपरिग्रहीतत्वेन च प्रमाणमिति नान्धपरम्परा, प्रत्यक्षा च स्मृतिः स्मृतिमूलं नानुमिता अनुमितवेदवत्तस्याननुभावकत्वात् । वेदार्थस्मृतिताप्रसिद्धिस्तु प्रत्यक्षवेदमूलस्मृतिसाहचर्येण भ्रमात् प्रत्यक्षवेदाबोधितलोभ-न्यायमूलस्मृताविव तान्त्रिकाणां लिङ्गाभासजन्यवेदमूलकत्वं कल्पयति । अथ स्मृतिरिव तद्वेदमूलकत्वप्रसिद्धिरपि महाजनपरिग्रहीता एवञ्च सा वेदमूलत्वनिबन्धना अविगीतमहाजनपरिगृहीतवेदमूलत्वप्रसिद्धित्वात् प्रत्यक्षवेदमूलस्मृतौ तत्प्रसिद्धिवत्, एवं वेदार्थताप्रसिद्धिरपि । अन्यथा महाजनपरिगृहीतानादरे वेद-स्मृत्योरपि प्रामाण्यं न स्यादिति चेत्, न, यूपहस्त्यादिस्मृतेस्तत्प्रसिद्धौ व्यभिचारात्, क्लृप्तलोभादित एव तत्सम्भवात् विचारकाणां विप्रतिपत्तेश्च तत्र तत्प्रसिद्धौ विगानं महाजनानामिति चेत्, न, अत्रापि मूलान्तरसम्भवाद्विप्रत्तिपत्तेश्च

विगानमेव तेषां । अतएव स्मृतीनां न्यायमूलत्वे सम्भवति वेदमूलत्वप्रसिद्धावपि न वेदमूलत्वं । न च वेदमूलेऽयमिति कृत्वा स्मृतेर्महाजनपरिग्रहात् तन्मूलत्वं, वेदमूलेयमिति प्रथमं ज्ञातुमशक्यत्वात् शक्यत्वे वा किमनुमानेन । न च वेदमूलत्वेन प्रकारेण महाजनपरिग्रहः, असिद्धेः मन्वादिस्मृतित्वेन पूर्वमहाजनपरिग्रहेणोत्तरोत्तरेषां परिग्रहादनुष्ठानाद्युपपत्तेः, एवं होलाकाद्याचारेऽपि वेदलिङ्गेनैव कर्तव्यताज्ञानोपपत्तेः किं वेदेन, तदर्थस्य लिङ्गादेवोपपत्तेः । अविगीतालौकिकविषयकशिष्टाचारस्य वेदमूलत्वदर्शनात् वेदानुमाने चाविगीतशिष्टाचारत्वेन भोजनाद्याचारोऽपि वेदमूलः स्यात्, वेदं विनापि तत्कर्तव्यताधीसम्भवात् न तदर्थं वेद इति इहापि तुल्यम् । अचार-कर्तव्यतानुमानयोरनादित्वेनाचाराणां कर्तव्यत्वानुमानमूलकत्वात् नान्धपरम्परा । न च पूर्वानुमानसापेक्षमुत्तरानुमानमिति स्वतन्त्रप्रमाणमूलकत्वाभावात् सा, व्याप्ति -पक्षधर्मतावत्त्वेन सर्वेषां स्वतन्त्रप्रमाणत्वात् । नापीतरप्रामान्याधीनं सर्वस्य प्रामाण्यमिति न निरपेक्षत्वं, प्रत्यक्षादेरपि तथात्वापत्तेः । एतेन विवादपदमाचारो निरपेक्षप्रमाणमूलकः अविगीतमहाजनाजारत्वात् प्रत्यक्षवेदमूलाचारवदिति निरस्तं । अनुमानस्य निरपेक्षप्रमणत्वात् प्रमाणमूलत्वनैव हेतोरुपपत्तेः निरपेक्षत्वस्य गौरवेणाप्रयोजकत्वाच्च । न च सापेक्षत्वेन न प्रमाणता, व्याप्त्यादिसत्त्वात् । न च सापेक्षत्वेन न प्रमाणता, व्याप्त्यादिसत्त्वात् ,। अन्यथा प्रमाणे नैरपेक्षस्य वैयर्थ्यात् । न चाचारे वेदमूलत्वप्रसिद्धेस्तदनुमानं, असिद्धेः व्यभिचारादन्यथोपपत्तेश्च । न च वेदमूलत्वेनैव महाजनपरिग्रहात्तथा, न हि वेदमूलोऽयमिति कृत्वा महाजनानां तत्परिग्रहः, वेदमूलत्वस्य प्रथमं ज्ञातुमशक्यत्वाच्छक्यत्वे वा किमनुमानेन । न च वेदमूलत्वेनैव महाजनपरिगृहीतोऽयमाचार इति ज्ञात्वा तत्र महाजनपरिग्रहः, गौरवादसिद्धेश्च । पूर्वमहाजनपरिग्रहादेवोत्तरोत्तरेषां परिग्रहादनुष्ठानोपपत्तेः । तादृशस्मृत्याचारयोर्वेदमलत्वेन व्याप्तेर्वेदसिद्धिरिति चेत्, न, असम्भवन्मूलान्तरत्वस्योपाधित्वात् । अन्यथा लोभ-न्यायमूलस्मृतेरपि वेदमूलत्वप्रसङ्गः । अस्तु वा स्मृत्याचारयोरनादित्वं । न चाचारात् स्मृतिः स्मृतेराचार इत्यन्धपरम्परा मूलभूतप्रमाणाभावात् इति वच्यम् । स्मृत्याचारयोरुभयोरपि प्रमाणत्वात् । अन्यथा न ततो वेदानुमानमपीति । उच्यते । प्रलये पूर्वस्मृत्याचारयोरुच्छेदात् सर्गादौ नित्यसर्वज्ञेश्वरप्रणीतवेदमूलत्वं स्मृत्याचारयोः । अन्यथा मूलाभावेनान्ध-परम्पराप्रसङ्गः । न च मन्वादीनामतीन्द्रियार्थदर्शित्वं, तदुपायश्रवणादेस्तदानीमभवात् । पूर्वसर्गसिद्धसर्वज्ञमन्वादय एव ते इति चेत्, न प्रमाणाभावात् । स्मृत्याचारयोः प्रमाणमूलत्वमेव तत्कल्पनमिति चेत्, न, प्रतिसर्गं तेषामन्योन्यत्वकल्पने गौरवमित्येकस्यैव नित्यसर्वज्ञस्य कल्पनात् । न च स्मृतय एव तत्प्रणीताः, तासां मन्वादिकर्तृकत्वेन स्मृतौ बोधनात् स्मृतावेव स्मृतीनां वेदमूलत्वस्मरणाञ्च । एवञ्च स्मृत्याचारयोर्महाजनपरिग्रहाद्वेदमूलत्वसाधकमपि भगवति प्रमाणम् । अतएव *प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते* इत्यागमोऽपि । एवञ्च पूर्वं प्रत्यक्षमू#ूलावेव स्मृत्याचारौ, अग्रे च कालक्रमेणायुरारोग्य-बल-श्रद्धा-ग्रहण-धारणादिशक्तेरहरपचीयमानत्वात् तदध्ययनविच्छेदन शाखोच्छेदात् स्मृत्याचारभ्यामेव कर्तव्यतामधिगत्य प्रवृत्तिः । नन्वेवं स्मृतिरस्तु वेदमूलामङ्गलाद्याचारस्त्वीश्वरादेव भविष्यति घट-लिप्यादिसम्प्रादयवदिति चेत्, न, बहुव्यापारघटितस्य तत्तदाचारस्य गुरुत्वेन मङ्गलमाचरेदित्यादिवाक्यस्यैव लाघवेन कल्पनात् । न च मङ्गलादिपदशक्तिग्रहार्थे तदुपपत्तेः । अत एव यत्र वचनमात्रात् परप्रतिपत्तिस्तत्र नाचारः परीक्षकाणां, तस्य च वेदत्वं नेश्वरप्रणीतत्वेन शक्तिग्रहणार्थतद्वचने व्यभिचारात्, किन्तु तादृशाचारास्य वेदमूलत्वनियमादिति । स्यादेत्, प्रलये सत्येवमेव तत् स एव तु नास्ति प्रमाणाभावत् इति चेत्, न, काल-कपालान्यावृत्तिघटप्रागभावः कार्यद्रव्यानाधाराधारः कार्यद्रव्यानधिकरणकार्याधिकरणवृत्तिर्वा अभावत्वात् आकाशवृत्त्यन्योन्याभाववदिति वृत्तप्रलयसाधनात् । एवमेव घटध्वंसं पक्षीकृत्यागामिप्रलयसाधनम् । यद्वा घटः कार्यद्रव्यानधिकरणकार्याधिकरणवृत्तिध्वंसप्रतियोगी कार्यत्वाच्छब्दवत् । यद्वा कार्यद्रव्यत्वं कार्यद्रव्यानधिकरणकार्याधिकरणवृत्तिध्वंसप्रतियोगिवृत्ति कार्यमात्रवृत्तित्वात् शब्दत्ववत् । यद्वा एककालीनाः सर्वे परमाणवः समग्रीपादेयप्रबन्धशून्या आरम्भकत्वात् नष्टपवनारम्भकपरमाणुवत् । सर्वत्र पक्षतावच्छेदकावच्छिन्नं साध्यं प्रतीयते इति एककाले शून्यते लभ्यते । न च पवनपरमाणूनामपि पक्षत्वेनांशतः सिद्धसाधनं, पक्षधर्मताबललभ्यसाध्याप्रतीतेः, अभेदानुमानवच्च पक्षस्य दृष्टान्तत्वाविरोधः । यद्वा परमाणवः कार्यद्रव्यानधिकरणवृत्तिकार्यवन्तः नित्यद्रव्यत्वात् आकाशवत्, भूगोलकसन्तानोऽयं भूगोलकसन्तानानधिकरणवृत्तिध्वंसप्रतियोगी कार्यत्वात् घटवत् । यद्वा एतत्कर्मातिक्तानि कर्माणि एतत्प्रतिबन्धकप्रतिबध्यानि कर्मत्वात् एतत्कर्मवत् । न चात्र व्यभिचारशङ्का, सर्वेषामेवंरूपत्वादनेवम्भावे च स्वभावप्रच्यवात् । अन्यथा नियमेऽपि नियमान्तरापेक्षायामनवस्थितेः । आगमोऽप्यमुमेवार्थं संवतदीति कृतं प्रसक्तानुप्रसक्त्या ।।

# विधिवादपूर्वपक्षः

आचारमूलत्वं वेदस्य प्रवर्तकज्ञानजनकत्वेन भवतीति प्रवर्तकज्ञानं निरूप्यते । तत्राभिधा-सङ्कल्पापूर्व-भावनाज्ञानं न प्रवर्तकं, तस्मिन् सत्यपि अप्रवृत्तेः असत्यपि प्रवृत्तेश्च । कार्यत्वज्ञानं प्रवर्तकमिति गुरवः । तथा हि ज्ञानस्य कृतौ जन्यायां चिकीर्षातिरिक्तं न कर्तव्यमस्ति तत्सत्त्वे कृतिविलम्बोहेत्वन्तराभावात्, चिकीर्षा च कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयेच्छा पाकं कृत्या साधयामीति तदनुभवात्, सा च स्वकृतिसाध्यताज्ञानसाध्या इच्छायाः स्वप्रकारकधीसाध्यत्वनियमात् । अतएव स्वकृतिसाध्ये पाके प्रवर्तते, न त्विष्टसाधनताज्ञानसाध्या स्वकृत्यसध्ये चिकीर्षापत्तेः, स्वकृत्यसाध्यत्वज्ञानं प्रतिबन्धकमिति चेत्, न, तदभावकारणत्वे गौरवात् । अथाभाव उभयसिद्धः कृतिसाध्यताधीरसिद्धेत्यतो न लाघवावसर इति चेत्, न, यत्र शब्दादनुमानद्वा दैवात् सा तत्र लाघवावतारादिच्छायाः स्वप्रकारकज्ञानसाध्यत्वनियमेन कृति#ासाध्यत्वज्ञानस्यावश्यकत्वाच्च जनकज्ञानं विघटयत एव ज्ञानस्य प्रतिबन्धकत्वाच्च । व्याप्तिज्ञानविघटनद्वारा अनुमितिप्रतिबन्धकानैकान्तिकज्ञानवत् ।

अन्यथा स्वकृत्यसाध्यत्वानिष्टसाधनत्वोपेक्षणीत्वनिष्फलत्वज्ञानं प्रतिबन्धकं क्रियाज्ञानमेव प्रवर्तकं कल्पेत ।

ननु सनोधात्वर्थगोचरेच्छावाचित्वात् लाघवाञ्च कृताविच्छा चिकीर्षा सा च वृष्टाविवेष्टसाधनताज्ञानादिति चेत्, न, वह्निना साधयामीतिवत् कृत्यासाधयामीतीच्छाया: कृते: पूर्वमनुभूयमानाया: सनन्तावाच्यत्वेन गौरवेण च प्रत्याख्यातुमशक्यत्वात् । किञ्च पाकं चिकीर्षतीत्यत्र प्राधान्येन पाकस्येच्छाविषयत्वमनुभूयते न तु कृते:, धातोश्च सन्प्रत्ययाभिधेयेच्छाप्रकारवाचित्वं, ओदनं बुभुक्षत इत्यत्र भोजनविशेष्यतयौदनस्येच्छाविषयत्वानुभवात् । इष्टसाधनत्वेन वृष्टाविव कृताविच्छासम्भवेऽपि कृतीच्छा न प्रवर्तिका किन्तु स्वकृतिसाध्येच्छैव, घटं जानाति चिकीर्षति करोतीज्ञान-चिकीर्षा-कृतीनामेकविषयत्वानुभवात् । अथ यदि कृत्या साधयितुमिच्छा सा तदा चिकीर्षितस्य पाकस्यान्यत: सिद्धौ सा नापगच्छेत्, न ह्युपायविशेषसाध्यत्वेनेच्छोपायान्तराधीनफललाभेन निवार्यते, प्रीत्या धनलाभेऽपि प्रतिग्रहेण तल्लिप्साया अनिवृत्तेरिति चेत्, न, स्वविषयसिद्धत्वस्य फलेच्छाविच्छेदस्य चोपायेच्छाविरोधत्वात् ।अस्ति च तत्र पाकौदनयो: सिद्धत्वं, अन्यौदनेच्छायां पाकचिकीर्षा भवत्येव, प्रत्युतासिद्धत्वात् कृतावेवेच्छा न विच्छिद्येत यदि कृतिविषयसिद्धत्व-फलेच्छाविच्छेदौ न विरोधिनौ । प्रीत्या धनलाभे च तदधिकधनेच्छा न विच्छिद्यते तस्यासिद्धत्वात् तत्फलेच्छायाश्च सत्त्वात् धनमात्रार्थिनश्च प्रीत्या धनलाभेऽपि प्रतिग्रहेण तल्लिप्सा नास्त्येव धनमात्रस्य सिद्धत्वात् । किञ्चिद्विशेषसिद्ध्यैव हि सामान्येच्छाविच्छेद: । अन्यथा सकलस्वविषयसिद्धेरसम्भवेन तद्विच्छेदो न स्यादेव । वस्तुतस्तु क्रियानुकूला कृतिरिष्टोपाय इति ज्ञाने क्रियाया: कृतिसाध्यत्वमिष्टोपायत्वञ्च भातं क्रियाद्वारैव कृतेरिष्टसाधनत्वादिति तद्बोधात् कृताविव कृतिसाध्यत्वेन क्रियायामपि सैवेच्छेति चिकीर्षायां कृतिसाध्यत्वप्रकारनैयत्यमत: कृतिसमानविषयचिकीर्षात्वेन चिकीर्षाया: कृतिकारणत्वं न तु कृतीच्छात्वेन भिन्नविषयतया गौरवात् । तथापि येन रूपेण यस्येष्टसाधनत्वं तेन प्रकारेण तत्रेच्छा यथा स्वकेदारवृष्टित्वेन इष्टसाधनत्वात् तथैवेच्छा तथा कृतिसाध्यत्वेन पाकस्येष्टसाधनत्वमत: कृतिसाध्यत्वेन तत्रेच्छा भवतीति, कृतौ कृतिविषये वा चिकीर्षायां न वृष्टीच्छा, विलक्षणसामग्रयन्तरकल्पनमिति चेत्, भवेदेवं, यदि कृतिसाध्यत्वेन पाकस्य ओदनसाधनता स्यात्, न चैवं गौरवात् किन्तु पाकत्वेन, स तु कृतिं विना नेत्यन्यदेतत् । वह्निना साधयामीतिवत् कृत्या साधयामीतीच्छा इष्टसाधनताज्ञानादेवेति चेत्, तर्हि तत्र वह्निसाध्यताज्ञानवदत्रापि कृतिसाध्यत्वज्ञानं कारणमावश्यकं कृतौ चानुभवसिद्धचिकीर्षाधीनतत्वं विशेष: तेन प्राणपञ्चकसञ्चारे जीवनयोनिकृतिसाध्ये न प्रवृत्ति:, अन्यथा कृतिसाध्येष्टसाधनतापक्षेऽपि तत्र प्रवर्तेत । ननु चिकीर्षाधीनत्वस्योपलक्षणत्वे उपलक्ष्यमात्रगतानतिप्रसक्तधर्माभावात् कृतिमात्रस्य चातिप्रसङ्गात् तत्तत्कृतिविशेषा उपलक्ष्या: तथाच तदननुगमात् प्रवृत्त्यननुगम:, विशेषणत्वे चिकीर्षायां प्रवृत्तौ च चिकीर्षाज्ञानकारणत्वे गौरवं प्रमाणाभावश्च । किञ्च चिकीर्षासाध्यावस्थाया: कृते: सिद्धावस्थसाधनत्वविरोधेन कृतिसाध्यता पाकादौ न ज्ञायेतेति चेत्, न, अस्ति हि कृतिविशेषोमानसप्रत्यक्षसिद्धोजीवनयोनिप्रयत्नव्यावृत्तश्चिकीर्षोपलक्ष्य: यत्र चिकीर्षाकारणत्वग्रह: स च तव जातिरूपो मम त्वनुगतकारणोपाधिरूप:, एवञ्च चिकीर्षाधीनत्वेनानुगतेन कृतिविशेषाणामुपलक्ष्याणां अनुगतत्वमपि । यथा गोत्वेण तटस्थे नोपलक्षिता महिष्यादिव्यावृत्तधानकर्मव्यक्तिविशेषा:

धेनुपदेनोच्यते न तु गोत्वमपि, तथा चिकीर्षापि, एवं जीवनयोनियत्नव्यावृत्तकृतिविशेषाणां कृतित्वेन ज्ञानं कारणमिति नाननुगम: । ननु कृतिसाध्ये न कृतिर्विशेषणमसत्त्वात् सत्त्वे वा कृतौ सत्यां ज्ञानं ज्ञाने च कृतिरित्यन्योन्याश्रय:, नोपलक्षणमतिप्रसङ्गादिति चेत्, न, कृतिर्हि ज्ञाने विषयतया विशेषणमेव साध्ये च परिचायकतयोपलक्षणं अन्यथा इष्टसाधनेऽपीष्टं न विशेषणमसत्त्वात् नोपलक्षणमतिप्रसङ्गात्, लिङ्गज्ञानादौ वा का गति: । नन्वेवं श्रमेऽपि चिकीर्षा स्यात्तस्यापि चिकीर्षाधीनकृतिसाध्यत्वात् अत्र वदन्ति । श्रमस्तु भोजनादिक्रियासाध्यो न तत्कृतिसाध्य: अचिकीर्षितत्वात् कृते: स्वध्वंससाक्षात्कारातिरिक्ते चिकीर्षाविषयमात्रे जनकत्वात्, न हि भोजनचिकीर्षाविषयमात्रे जनकत्वात्, न हि भोजनचिकीर्षाधीनकृत्या गमनं साध्यते इति केचित्, तन्न, गुरुतरभारोत्तोलने कृत्यसाध्ये भ्रमात् प्रवृत्तस्य निगडनिश्चलदेहस्य वा कृतौ सत्यामुत्तोलन-चलनक्रियानुत्पादेऽपि श्रमानुभवात् कृतेरेव कारणत्वात् । न तु तज्जन्यक्रियाया: सुखे व्यभिचाराच्च । न हि सुखं कृतिकारणचिकीर्षाविषय:, उपायचिकीर्षाजन्या हि कृति: न तु सुखचिकीर्षाजन्या । चिकीर्षाजन्यकृतिसाध्यत्वं न श्रमे द्वेषयोनिप्रयत्नादपि तदुत्पत्तेरित्यपरे । तन्न । शत्रुबधस्येष्टसाधतनत्वेन चिकीर्षाजन्यकृतिसाध्यत्वात् द्वेषस्य यत्नाजनकत्वात्, द्वेषसिद्धिस्तु शत्रुं द्वेष्मीत्यनुभवबलात् ।

यत्तु श्रम: कृतित्वेन कृतिसाध्यो न चिकीर्षाधीनकृतित्वेन, यद्यचिकीर्षितेऽपि श्रमे चिकीर्षाधीन कृतित्वेन कारणता स्यात् तदा चिकीर्षितमेव भोजनं कृत्या साध्यते नाचिकीर्षितं गमनादीति न स्यात्, श्रमवङ्गमनेऽपि तज्जन्यत्वप्रसङ्गात्, भोजनादिश्च चिकीर्षाधीनकृतिविशेषात्, स हि कृतिमात्रं व्यभिचारति जीवनयोकृतेस्तदनुत्पादात् । यद्वा श्रमो न भोजनकृतिसाध्य: किन्तु तन्निरन्तरोत्पन्नज्जीवनयोनिप्रयत्नादेवेति । तन्न । न हि । कृतित्वेन तच्छ्रमजनकत्वं, नापि कृत्यन्तरादेव श्रमोत्पत्ति:, जीवनयोनिप्रयत्ने सत्यपि भारोद्वहनादिकमकुर्वतस्तादृशनमाननुभवेन तस्य श्रमाजनकत्वात् तस्मात् भोजनादिवत् श्रमविशेषणामपि भोजनादिकृतिसाध्यत्वमनन्यगतिकत्वात् । सुप्तस्य स्वेदाद्यनुमित: श्रम: तज्जन्य इति चेत्, न, स्वेदादे: श्रमान्यहेतुकत्वात् अन्यथा जागरेऽपि तदनुवृत्तौ श्रमानुवृत्तिप्रसङ्गात् इति मैवं स्वेच्छाधीनकृतिशेषणत्वात्, श्रमश्च नियमतोऽन्येच्छाधीनकृतिसाध्य: श्रमे दु:खत्वेनेच्छाविरहादतएवान्येच्छाजन्यकृतिसाध्यत्वेन श्रमो नान्तरीयक इत्युच्यते । स्वचिकीर्षाधीनत्वन्तु न कृतौ विशेषणं गौरवात् ।

अन्ये तु कृतिगतं धर्मान्तरमेव उद्देश्यत्वं तद्विशिष्टकृतिसाध्यश्च न श्रम: अचिकीषि#ॅतत्वात् किन्तु कृतिमात्रसाध्य: । अतएव कष्टं कर्मेत्यनुभवोलोकानां । एवं चिकीर्षायां ममैकं कृतिसाध्यत्वं प्रयोजकं तव तु कृतिसाध्यत्वे सतीष्टसाधनत्वं सुखत्वं दु:खाभावत्वञ्चेति चतुष्टयं, इच्छाप्रयोजकन्तु मम सुखत्वं दु:खाभावत्वञ्चेति द्वयं, वृष्टिसाध्नत्वेन तत्रेच्छा साधनत्वस्येच्छाविरोधित्वात् । तव तु चयं, विषभक्षणे त #ुकृतिसाध्यत्वेऽपि बलवदनिष्टसाधनत्वेन चिकीर्षा नास्तीति कृतौ चिकीर्षाजन्यत्वं विशेषणमिति कश्चित्, तत्तुच्छं, एवं हि विषभक्षणं कृतिसाध्यमेव न स्यात् जीवनयोनिकृते स्तस्यानुत्पत्तेरिति व्यर्थं विशेषणम् ।

स्यादेतत् इष्टसाधनताभ्रमाद् विषभक्षणे चैत्यवन्दने च चिकीर्षाजन्यकृतिसाध्यत्वमस्ति ज्ञानप्रयुक्तत्वात् कार्यत्वस्य तथाच सञ्जातबाधोऽपि तत्र कार्यं त्वज्ञानात् प्रवर्तेत तथा तृप्तोऽपि भोजने ।

ननु स्वकृतिसाध्यतानुभवस्तथा, अन्यथेष्टसाधनतास्मरणे विषभक्षणेऽपि प्रवर्तेत, न चेष्टसाधनताज्ञानं वेदोवाऽनुभावकमस्तीति चेत्, न, वस्तुतस्तत्र कृतिसाध्यत्वे लिङ्गान्तरेणाप्तवाक्येन वा तदनुभवसम्भवात् लिङ्गाभासाच्छब्दाभासाद्वा अप्रवृत्तिप्रसङ्गाच्च, भेदाग्रहवादिनस्तच्च तव तदनुभवाभावात्, मे#ैवं, स्वविशेषणवत्ताप्रतिसन्धानजन्यं हि कार्यताज्ञानं प्रवर्तकं तथा हि काम्ये पुरुषविशेषणं कामना ततः काम्यसाधनताज्ञानेन याग-पाकादौ कार्यताज्ञानं, नित्ये च काल-शौचादि स्वविशेषणं, तथाचैतत्सन्ध्यायामहं कृतिसाध्यसंध्यावन्दनः संध्यासमये शौचादिस्वविशेषणज्ञानजन्यं, तदुक्तं, स च कार्यविशेषः पुरुषविशेषणावगतः प्रवृत्तिहेतुरिति । संजातबाधस्य च विषभक्षणे चैत्यवन्दने च भ्रमदशायामिव नेष्टसाधनताज्ञानमस्ति येन तज्जन्यकार्यताज्ञानात् प्रवर्तेत तृप्तस्य च कामनाविरहेण इष्टसाधनताज्ञानाभाव न तथा बोधः ।

अन्ये त्वात्मनो जीवित्वप्रतिसन्धानजन्यं श्रमे कृतिसाध्यताज्ञानं सम्भवतीति जीवनव्यतिरिक्तत्वं स्वविशेषणे विशेषणमिति, तन्न, श्रमे स्वेच्छाधीनकृतिसाध्यत्वाभावात् । इष्टसाधनतालिङ्गकं कार्यताज्ञानं प्रवर्तकं इत्यपरे, तन्न, नित्ये तदभावात् ।

ननु विषभक्षणव्यावृत्तमि#ेष्टसाधनत्वमेव कृतिसाध्यताज्ञाने विषयतया विशेषणमस्तु स्वविशेषणवत्ताज्ञानजन्यत्वापेक्षया लघुत्वात् । किञ्चोपायविषया

चिकीर्षा इष्टसाधनताज्ञानसाध्या उपायेच्छात्वात् वृष्टीच्छावत् । भोगचिकीर्षायां तदभावावप्रयोजकमिष्टसाधनत्वमिति चेत्, न, तवापि स्वविशेषणधीजन्यत्वाभावेन तत्र तस्याप्रयोजकत्वात् । कृतिहेतुचिकीर्षायां तत् प्रयोजकं, न च भोगचिकीर्षा तथा, उपायचिकीर्षात एव कृतिसम्भवात्, इति चेत्, तुल्यमिति, मैवं, साध्यत्व-साधनत्वयोर्विरोधेनैकत्र ज्ञातुमशक्यत्वात् । असिद्धावस्थस्य हि साध्यत्वं सिद्धतादशायां तदभावात् सिद्धतादशायाञ्च साधनत्वं असिद्धावस्थावतः कार्यानुत्पत्तेः तथाच पाकादेरसिद्धत्व-सिद्धत्वज्ञाने साध्यत्व-साधनत्वग्रहः । न चैकमेकेनैकदा सिद्धममसिद्धञ्च इति ज्ञायते । न च स्वरूपगततासाध्यत्व-साधनत्वयोरतो न विरोध इति वाच्यम् ।यदि हि स्वरूपनिबन्धनं तदुभयं तदा तत्स्वरूपं सदैव सिद्धमसिद्धञ्च स्यात्, भिन्ननिरूपितत्वेऽपि तयोः सिद्धत्वासिद्धत्वे अनवगम्याज्ञानात्, तस्मात् समयभेदोपाधिक एव तदुभयसम्बन्धः पाके । इदानीं साध्यत्वं अग्रे साधनत्वं ज्ञायत इति चेत्, न, इदानीमग्रिमपदार्थयोर्नानात्वादननुगमेन व्याप्त्यग्रहात् शब्देन तथा प्रतिपादयितुमशक्यत्वात् गौरवाच्च । न च कृतितः सिद्धमिष्टसाधनमितिज्ञानात् चिकीर्षा, न हि सिद्धं कश्चित् चिकीर्षति, कृतेः पूर्व कृतितः सिद्धमिति ज्ञानाभवाच्च । न च कृतिसाध्यत्वेन पाकादेरिष्टसाधत्वात् साधनत्वमपि साध्यम् ।न हि कृतिसाध्यत्वेन पाकस्यौदनसाधनता, इत्युक्तं तस्मात् कृत -क्रियमाणविलक्षणं कृत्यनन्तरभविष्यत्तारूपं कृतिसाध्यत्वं चिकीर्षाप्रयोजकं तादृशञ्च साधनत्वविरोध्येव । किञ्च साधनत्वस्य सिद्धमात्रधर्मत्वात् साधनत्वज्ञानमिच्छाविरोधि, न हि कश्चित् सिद्धमिच्छतीत्युक्तम् । एतेन वृष्ट¬ादाविष्टसाधनताज्ञानमुपायेच्छाकारणत्वेन क्लृप्तमिति निरस्तम् । कथं तर्हि स्वतोऽसुन्दरे वृष्टादिविच्छा, तत्साध्येष्टज्ञानादिति गृहाण ।

अन्ये तु सुख-दुःखाभाव-तत्साधनेष्टिच्छाप्रयोजकमनुगतमुद्देश्यत्वं पुरुषार्थपदवेदनीयं धर्मान्तरमस्ति अनुगतकार्यस्यानुगतकारणनियम्यत्वात् । तदेव दुःख-तत्साधनादौ चिकीर्षाप्रयोजकमिति । न च दुःखविरोधित्वमेव तथास्तीति वाच्यम् । सहानवस्थाननियमविरोधस्यासम्भवात्, बध्य-धातक भावस्यैकसमये समानाधिकरण्याभावस्य च यत्नादि साधारण्यादिति । तन्न । तदज्ञानेऽपि सुखत्वज्ञानादिच्छोत्पत्तेः, न हि सुखत्वे ज्ञाते धर्मान्तरज्ञानं विना नेच्छति, तथात्वे स्वतः प्रयोजनहान्यापत्तेः, तदेव हि स्वतः प्रयोजनं तदवगतं सत् स्ववृत्तितयेष्यते । किञ्चानुगतधर्मकल्पनापि कारणे । न च सुखादि इच्छाकरणं अनागतत्वात्, किन्तु तदवगमः, तर्हि सुखादिज्ञाने तत् स्वरूपसदेवेच्छाप्रयोजकमस्त्विति चेत्, न, यथा ह्युद्देश्यत्वं सुखज्ञानादिषूत्पद्यते अन्यतरत्वात् तृणारणि-मणिन्यायाद्वा तथैवेच्छैव जायतां, कृतिसाध्यत्वञ्च कृतौ सत्यां अग्रिमक्षणे स्वरूपं न कृतिं विना, क्षेमसाधारणञ्चैतत् । कृतिसाध्यत्वञ्च न कृतेः पूर्वं । ननु कृतौ नष्टायां सन्नपि धर्मी न कार्यः तथाच कथं कार्येऽपूर्वे कामिनोऽन्वयःक्षणिकत्वेन क्रियातुल्यत्वादिति चेत्, न, यद्वृत्तिकाम्यसाधनत्वं तत्र कार्यता बुद्धेः प्रयोजकत्वात् न तु कार्यताविशिष्टस्य काम्यसाधनतेति व्याप्तिः । ननु पाकादौ कृतिसाध्यताज्ञानं न प्रत्यक्षेण कृत्यनन्तरं पाके सति कृतिसाध्यताज्ञानं तस्मिन् सति कृतिरित्यन्योन्याश्रयात् कृतिसाध्यतोतीर्णे चिकीर्षा-कृत्योरसम्भवाच्चेति चेत्, न, पाको मत्कृतिसाध्यः मत्कृतिं विना असत्त्वे सति मदिष्टसाधनत्वात् दैवाद्यनधीनत्वे सति मदिष्टसाधनत्वाद्वा मद्भोजनवदित्यनुमानात् स्वकृतिसाध्यताज्ञानं यस्य यदिष्टसाधनं यत्कृतिं विना यदा न सम्भवति तत् तदा तत्कतिसाध्यं इति व्याप्तेः । असिद्धस्येष्टसाधनत्वाभावात्, बलवदनिष्टाननुबन्धित्वञ्च लिङ्गविशेषणं तेन न मधु-विषसंम्पृक्तान्नभोजने व्यभिचारः सामान्यतस्तस्यापि कृतिसाध्यतोतीर्णे न व्यभिचारः सामान्यतस्तस्यापि कृतिसाध्यत्वात्, अतीततादशायाञ्चातीतौदनेच्छाविरहेणेष्टसाधनत्वाभावात् । अतएव निदाघदूनदेहोवर्षति वारिदे तोयदातोयलाभसम्भावनायां वा सरोऽवगाहने न प्रवर्तते इष्टसन्तापशान्तिसाधनतोयसम्बन्धस्य स्वकृतिं विनापि सिद्धिप्रतिसन्धानेन लिङ्गाभावेन स्वकृतिसाध्यत्वज्ञानाभावात् । यदा च मत्कृतिं विना न सम्भवतीति प्रतिसन्धत्ते तदा प्रवर्तते ।

यस्य सन्तापशान्तिममात्रमिष्टं स सतोऽवगाहनस्येष्टसाधनत्वमेव न प्रतिसन्धत्ते उपस्थितवृष्टितोऽपि तत्सम्भवादिति कश्चित्, तन्न तोयसम्बन्धत्वेन सन्तापशान्तिसाधनत्वं तस्य च सरोऽवगाहनेऽपि सत्त्वात् अन्यथा वृष्टिरपि तत्साधनं न स्यात् सरोऽवगाहनादपि तत्सिद्धेः ।

कार्यसाधनत्वञ्च कृतिसाध्यत्वे न लिङ्गं पाकादिवदोदनादेरपि प्रवृत्तेः पूर्वं कृतिसाध्यत्वज्ञाने हेत्वभावात् ।

नन्वेवं लिङ्गज्ञानमेव प्रवर्तकं अस्तु प्राथमिकत्वात् आवश्यकत्वाञ्च । न च लाघवात् कृतिसाध्यत्वज्ञानं तथा, कृतिसाध्यतानुमितौ तदा मानाभावेन युगपदुपस्थित्यभावात् प्रवृत्तिसामग्र्यानुमितिप्रविबन्धाञ्चेति चेत्, न, लिङ्गज्ञाने कृतिसाध्यत्वाप्रकाशे तत्प्रकारकचिकीर्षायां तस्याहेतुत्वात् । अतएव

लिङ्गान्तरज्ञानमपि न प्रवर्तकम् । ननु पाकादिः कृतः क्रियमाणोवा न पक्षः तस्य कृतिसाध्यत्वे बाधात्, नाप्यनागतः, भाविपाके मानाभावेनाश्रयासिद्धेः, पाकत्वं भविष्यद्वृत्ति सामान्यत्वात् गोत्ववत् इति मानमिति चेत्, न, मानाभावेन गोत्वेऽपि तस्याप्रसिद्धेः । पाकमात्रं पक्ष इति चेत्, न, मात्रार्थो यदि पाकत्वं तदा बाधोलिङ्गासिद्धिश्र्च । सर्वपाकपरत्वे च तस्य सिद्धभागे बाधोऽनागतभागे चाश्रयासिद्धिः । वर्तमानाद्युदासीनः पाकः पक्षः पाकसामान्ये च कृतिसाध्यत्वं न बाधितमित्यपि न, सिद्धस्य पक्षत्वं नासिद्धस्येत्यनुमितेः सिद्धविषयत्वे बाधात् भिन्नविषयत्वे वा सिद्धविषयेच्छाप्रवृत्त्याद्यनुत्पादकत्वाच्च । कृत-क्रियमाणसाधारणकृति साध्यत्वज्ञानादेवासिद्धविषया चिकीर्षा कृतिश्र्चोत्पद्यते, अनन्यगतिकत्वेन तथाकारणस्वभावकल्पनादिति, चेत्, तर्हि यादृशं कृतिसाध्यत्वं चिकीर्षायां प्रकारः तादृशं ज्ञाने नास्तीत्यन्यप्रकारकज्ञानादेव चिकीर्षा स्यात् । तथा च लिङ्गज्ञानमेव प्रवृत्तिहेतुरस्तू#ु प्राथमिकत्वात् ।

यत्तु स्मृतपाके कृतिसाध्यत्वासंसर्गाग्रहात्प्रवृत्तिः स चासंसर्गाग्रहः इष्टसाधनताग्रहादिति । तन्न, स्मृतपाकस्य सिद्धत्वेन तत्र कार्यत्वासंसर्गग्रहेऽनुमानबाधात् । स्मृतपाकस्य सिद्धत्वं तदा न गृह्णते इति चेत्, तर्हि स्मृतपाकस्य सिद्धत्वग्रहे ओदनार्थी#े पाके न प्रवर्तेत, तत्र पाकादौ सिद्धत्वग्रहात्तदसंसर्गग्रह इति चेतुल्यम् । अपि च स्मृतपाके कार्यत्वासंसर्गाद्विद्यमानासंसर्गाग्रहाद्विसंवादिनी प्रवृत्तिः स्यात् । किञ्चैवं सिद्धपाकज्ञानादज्ञातेऽसिद्धे पाके इच्छा-प्रवृत्ती स्यातामिति । अत्र ब्रूमः । पाके कृतिसाध्यत्वं सिद्धत् सिद्धे बाधात् अनागतपाकमादाय सिध्यति । पक्षतावच्छेदकधर्मसामानाधिकरण्यं साध्यमानस्य लिङ्गेन सिध्यतीत्यनुमाने क्लृत्वात् यथा प्रसिद्धवह्निबाधेऽपि वह्निमात्रं न बाधितं इत्यप्रसिद्धोऽपि वह्निः सिध्यति तथा प्रसिद्धपाके कृतिसाध्यत्वबाधेऽपि पाकमात्रे न बाधितमित्यप्रसिद्धं पाकमादाय तत्सिध्यति, अप्रसिद्धयोः पक्षसाध्ययोः सिद्धावविशेषात्, तस्मात् असिद्धस्य क्वचित् सिद्धे सिद्धे सिद्धस्य च क्वचित् । अप्रसिद्धस्य चासिद्धे सिद्धिस्तेनानुमा त्रिधा। अन्यथा कृतिसाध्येष्टसाधनतापक्षेऽपि पाकादौ कृतिसाध्यत्वं कथमवगम्येत । किञ्च तवापीष्टसाधनताज्ञानात् कथं वृष्ट¬ादाविच्छा सिद्धत्वस्येच्छाविरोधित्वात् अनागतस्य ज्ञातुमशक्यत्वात् । अतएव सिद्धासिद्धविषयत्वनिरासेन सुखादिज्ञानात् फलेऽपि नेच्छेति न वृष्ट¬ादाविष्टसाधनतापि । न च वृष्ट¬ादिसाध्येष्टज्ञानात् वृष्ट¬ादाविच्छा, इच्छायाः सिद्धासिद्धवृष्ट¬ादितत्फलविषयत्वविकल्पग्रासात् । अथ सामान्यलक्षणप्रत्यासत्त्या वृष्ट¬ादित्वेन सुखादित्वेन च सिद्धासिद्धवृष्ट¬ादि-तत्फलवि#ेषयकं ज्ञानमुत्पन्नं तेन सिद्धं विरोधिनं त्यक्त्#ाव असिद्धविषयेच्छोत्पद्यते, यदि च सामान्यलक्षणा नास्ति तदा येन रूपेणेष्टसाधनत्वग्रहः तेन रूपेण ज्ञाते सिद्धे वेच्छोत्पद्यते, अन्वयव्यतिरेकाभ्यां तादृशज्ञानस्य तादृशेच्छाजनकत्वावधारणात् सुखेच्छायामप्येकं इति चेत्, तर्हि ममापि पाकत्वाच्छेदेन कृतिसाध्यताज्ञानादनागते चिकीर्षा तच्च ज्ञानं सकलपाकविषयं सन्निकृष्टपाकविषयं वेत्यन्यदेतत् । बालस्य व्याप्त्याद्यग्रहेणाद्या प्रवृत्तिर्जीवनादृष्टोद्बोधितजन्मान्तरसंस्कारजन्यात् स्तनपानं कार्यमिति स्मरणात् तवापीष्टसाधनतास्मरणात् तत्र प्रवृत्तिः अनन्यगतिकत्वात् । न च जन्मान्तरेऽपि पर्यनुयोगः । जन्मधाराया अनादित्वात् प्रत्यक्षानुमानमूलकत्वाच्च नान्धपरम्परा । वस्तुतस्तु शुष्ककण्ठतया बालो दुःखमनुभवन् विरोधितया सुखं स्मरति, ततः सुखत्वज्ञानात् सुखवृत्तिकार्यत्वं सुखवृत्तितया, अन्तरङ्गत्वात् न तु स्तनपानमिष्टसाधनमिति स्मरणं, सुखावृत्तित्वेन वहिरङ्गत्वात् सुखकार्यत्वञ्च स्तनपानमपि विषयः तेन स्तनपाने कार्यत्वज्ञानादेव प्रवृत्तिः, इष्टसाधनताज्ञानस्य तदानीं सामाग्र्यभावात् एवञ्चाद्यप्रवृत्तौ कार्यत्वज्ञानं प्रयोजकं क्लृप्तमित्यग्रेऽपि तदेव प्रवर्तकं क्लृप्तत्वात् ।

नवीनास्तु ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्तकं अनागतविषये प्रत्यक्षानुमानयोरसम्भवात्, किन्तु यादृशस्य पुरुषस्य कृतिसाध्यं यद्दृष्टं तादृशत्वमात्मनः प्रतिसन्धाय तत्र प्रवर्तते, तथाह्योदनकामस्य तत्साधनताज्ञानवतश्र्च तण्डुलाद्युपकरणवतः पाकः कृतिसाध्यः अहमपि च तादृश इति ज्ञानात् पाके प्रवर्तते । एवञ्चान्यकृतपाके कृतिसाध्यताज्ञानं आत्मनः पाके कृतिसाध्यत्वप्रयोजकविशेषणवत्त्वज्ञानञ्च प्रपर्तकं । अन्यत्रापि प्रवृत्तिरेवमेवेत्यनादितैव । अतएव सञ्चातबाधश्र्चैत्यवन्दने विषयभक्षणे च न प्रवर्तते इष्टसाधनता ज्ञानवतो हि तत् कृतिसाध्यं । न च सञ्जातबाधस्तत्र इष्टसाधनताज्ञानवान् । एवं तृप्तीच्छावतोऽपि भोजनं कृतिसाध्यं तृप्तश्र्च न तृप्तीच्छावत्त्वमात्मन्यवेतीति न भोजने प्रवर्तते ।

अतिनवीनास्तु यादृशस्येत्यादौ अविगीतत्वं तत्कृतौ विशेषणमाहुः । सञ्जातबाधस्तु विषभक्षणं चैत्यवन्दनञ्च विगीतकृतिताध्यत्वेनैव जानातीति तत्र न प्रवर्तते ।

प्रवृत्तिविषयश्र्च सामान्यतः कालासम्भिन्नः पाकादिर्ज्ञायते, प्रवृत्तिमहिम्ना चानागतपाकसिद्धिः , चिकीर्षा च कालासम्भिन्नविषया न तु भाविनं कृत्या साधयामीत्याकारैवेति ।

# विधिवादसिद्धान्तः

अत्रोच्यते । विषभक्षणादिव्यावृत्तं कृतिसाध्यत्वज्ञाने इष्टसाधनत्वं विषयतयावच्छेदकं लाघवात्, न तु#ु#ु#ु स्वशेषणवत्ताप्रतिसन्धानजन्यत्वं गौरवात् । न च सिद्धासिद्धावस्थयोः साध्यत्व-साधनत्वयोर्विरोधः, निर्विशेषितयोस्तयोरविरोधात् । पाकोऽसिद्धः साध्यः सिद्धः साधनञ्चेत्युनुभवात् । तदा साध्यत्वं हि तदा साधनत्वस्य विरोधि नियमतस्तेनैव तस्य प्रतिक्षेपेण सहानवस्थाननियमात्, न तु साधनत्वस्यान्यदा साधनत्वस्य वा, तयोरप्रतिक्षेपात् । अन्यदा साधनत्वेऽपि साधनत्वमस्त्येव सामान्याभावे विशेषाभावप्रसङ्गात् । एवन्तदा असिद्धत्वस्य तदा सिद्धत्वं विरोधि नियमतस्तस्यैव प्रतिक्षेपात्, न तु सिद्धत्वमात्रं, अन्यदपि तत्र सिद्धत्वाभावप्रसङ्गात्, निर्विशेषितयोर्विरोधे च सिद्धत्वयोश्चान्यतरदेव पाकादौ स्यान्न तु समयभेदेऽप्युभयम् । न च तदा कृतिसाध्यत्वे सति तदेष्टसाधनत्वज्ञानं प्रवर्तकं, अतएव वाजपेयेन यजेतेत्यत्र यागस्य करणावस्थायां सिद्धत्वेन न वाजपेयस्य साध्यता एकदा तयोर्विरोधादिति कर्मनामधेयत्वं, न तु करणस्य सिद्धत्वेन साध्यत्वविरोधः योगस्वरूपे तयोः सत्त्वात् ।

अथ विरुद्धयोरवच्छेभेदमादय एकत्र प्रतीतिः स्यात्। न च कृतिसाध्यत्वेष्टसाधनत्वयोः समयभेदमादयैकत्र प्रतीतिरस्ति, तथा लिङ्गाभावादिति चेत्, न, साध्यत्व-साधनत्वयोरविरोधस्योक्तत्वात्, एवं सिद्धत्वासिद्धत्वयोर्भावाभावरूपत्वेऽपि न विरोधः एकधर्मिगत्वेन मानसिद्धत्वात् । तस्मात् संयोग-तदभावयोरिव येन प्रकारेण ययोर्विरोधः तेन तयोरेकधर्मिगतत्वं न प्रतीयते, न तु रूपान्तरेणापीति । अपि च यदि साध्यत्व-साधनत्वयोर्विरोधस्तदा तवापीष्टसाधनत्वेन कार्यसाधनत्वेन वा कार्यत्वं नानुमीयते हेतु-साध्ययोर्विरोधेन सामानाधिकरण्याभावेन व्याप्त्यसिद्धेः पक्षे साध्य-साधनयोरन्यतरसत्त्वे बाधासिध्योरन्यतरप्रसङ्गाच्च । न च वाच्यमिदानीं मत्कृतिसाध्यत्वं साध्यमग्रे मदिष्टसाधनत्वं हेतुः दैवाद्यनधीनत्वे सति यदग्रे मदिष्टासाधनं तदिदानीं मत्कृतिसाध्यमिति व्याप्तिः तथाच समयभेदमादाय साध्यत्व-साधनत्वयोरवगम इति, इदानीमग्रिमपदार्थयोर्नानात्वादनुगतरूपाभावेन व्याप्तेरग्रहात्, पाकन्यायेनान्यत्रापि तत्तत्समयान्तर्भावेन साध्यत्व-साधनत्वयोरप्रतीतिः, प्रतीतौ वा ममापीदानीं कृतिसाध्यत्वे सत्यग्रे इष्टसाधनमिति ज्ञानं प्रवर्तकमस्तु । न च पाके साध्येष्टकत्वेन कृतिसाध्यत्वमनुमेयं, असिद्धावस्थावतो हि पाकादिष्टानुत्पत्तेः पाकस्य सिद्धत्वमवगम्य तत्साध्यत्वमि#ेष्टस्यावगन्तव्यमसिद्धत्वञ्चावगम्य कृतिसाध्यत्वमिति सिद्धत्वासिद्धत्वयोर्विरोधोऽत्रापि दुर्वारः । अपि च स्वविशेषणधीजन्यकार्यताज्ञानाभावात् सुखे कथं चिकीर्षा, न हि कृतिसाध्यताज्ञानमात्रात्, सा, सञ्जातबाधस्य विषभक्षणादौ चिकीर्षाप्रसङ्गात् । अथोपायचिकीर्षायां तत्कारणं इच्छाकरणसुखत्वज्ञाने कृतिसाध्यत्वं यदा विषयस्तदा सुखे चिकीर्षा नो चेदिच्छामात्रमिति द्वयमेव चिकीर्षाहेतुरिति चेत्, तर्हीच्छाहेतुज्ञाने यदा कृतिसाध्यत्वं भासते ताद चिकीर्षा नो चेदिच्छामात्रमित्येव सुख-तदुपायचिकीर्षाकारणमस्तु लाघवात्, सुखत्वज्ञानवदिष्टसाधनताज्ञानस्यापीच्छाकारणत्वात् । अत एव पाके इष्टसाधनताज्ञाने कृति#ासाध्यत्वं विषय इति तत्र चिकीर्षा न तु वृष्ट¬ादिज्ञाने तद्विषयत्वमितीच्छामात्रं, सुखचिकीर्षायामिच्छाकारणज्ञाने कृतिसाध्यताविषयके चिकीर्षाजनकत्वावधारणात् । अन्यथा तत्र चिकीर्षानुत्पत्तेः । वस्तुतस्तूपायचिकीर्षा इष्टसाधनताज्ञानसाध्या उपायेच्छात्वात् वृष्टीच्छावत् । न च भोगचिकीर्षावत्तेन विनापि स्यादित्यप्रयोजकत्वं, उपायेच्छायास्तदन्वय-व्यतिरेकानुविधानात् वृष्टेश्च स्वतोऽसुन्दरत्वेनेच्छानुत्पत्तेः अनुगतोपायेच्छायां अनुगतस्य प्रयोजकत्वे सम्भवति बाधकं विना त्यागायोगाच्च । न च चिकीर्षान्यत्वे सति उपायेच्छात्वं इच्छात्वं वा । तज्जन्यत्वे प्रयोजकं, गौरवात् सुखेच्छायां तदभावाच्च । एवञ्चोपायचिकीर्षायामिष्टसाधनत्वज्ञाने ध्रुवेऽतिप्रसङ्गवारणार्थं कृति#ासाध्यत्वनिर्वाहार्थञ्च कृतिसाध्यत्वमपि विषयतयावच्छेदकमस्तु न तु तद्विहाय तन्मात्रं, क्लृप्तकारणं विना कार्यानुपपत्तेः । अतएव स्तनपानप्रवृत्तावप्युपायेच्छाकारणत्वेन गृहीतस्येष्टसाधनत्वज्ञानस्यापि कल्पनं दृष्टानुरोधित्वात् कल्पनायाः । ननु साधनत्वमिच्छाविरोधि तस्य सिद्धधर्मत्वात् वृष्ट¬ादौ तत्साध्येष्टज्ञानादिच्छेति चेत् न, निर्विशेषितयोः सिद्धत्वासिद्धत्वयोरविरोधेनेच्छासाधनत्वयोरविरोधात् । तदाऽसिद्धत्वं तदा सिद्धत्वञ्च नेच्छासाधनत्वयोः प्रयोजकमिति तथा न ज्ञायत एव ।

यत्तु तत्साध्येष्टज्ञानाद् वृष्ट¬ादाविच्छेति, तत्तुच्छं, असिद्धावस्थाद्वृष्ट¬ादेरिषेटानुत्पत्तेस्तस्यावश्यं सिद्धत्वमवगन्तव्यमिच्छानुरोधित्वाच्चासिद्धत्वमिति,

तत्रापि विरोध एव । वृष्टौ सत्यामिष्टं तया विना नेत्यन्वय-व्यतिरेकग्रहस्य वृष्टिसिद्धत्वमादाय वृष्टिनिरूपितेष्टसाध्यकत्वग्राहकत्वात् । किञ्च चिकीर्षाजन्यकृतिसाध्यं मण्डलीकरणमित्यर्थप्रतिपादकं 'मण्डलीं कुर्यादिति वाक्यं प्रमाणं स्यात्वि#ेषयाबाधात् । एतेन नवीनमतमप्यपास्तं, परस्य हि कृतिसाध्यत्वौदनकामनावत्त्वेष्टसाधनताज्ञानानां ज्ञानं तथा आत्मन ओदनकामानावत्तेवष्टसाधनताज्ञानस्य ज्ञानं न प्रवृत्तिकारणं गौरवात्, किन्तु मत्कृतिसाध्यत्वे सति मदिष्टसाधनताज्ञानमेव लाघवात्, यथा च साध्यत्व-साधनत्वयोरविरोधः अनागतस्य पाकादेः कृतिसाध्यत्वज्ञानञ्च तथोपपादितमेव किञ्च परकृतिसाध्यत्वमज्ञात्वापि स्वकृतिसाध्येष्टसाधनताज्ञानात् स्वकल्पितलिप्यादौ यौवने कामोद्रेकात् सम्भोगादौ प्रवृत्तेश्च तदेव प्रवर्तकम्। वस्तुतस्तु सिद्धविषयककृतिसाध्यताज्ञानात् कथं कृत्या साधयामीतीच्छा सिद्धे इच्छाविरहात् असिद्धस्याज्ञानात् । अथ सिद्धविषयादेव कृतिसाध्यताज्ञानात् असिद्धविषया कृतिसाध्यत्वेनेच्छा ज्ञायते इच्छाया असिद्धविषयत्वस्वभावत्वादेकप्रकारकत्वेन ज्ञान-चिकीर्षयोः कार्य-कारणभावो न त्वेकविषयत्वे सति गौरवात्, इच्छाया अनागतविषयत्वात् तस्य चाज्ञानात् तथात्वदर्शनात् सुखादीच्छायामप्येवमिति चेत्, न, असिद्धविषयेच्छानुरोधेनानागतज्ञानोपायस्य दर्शितत्वात् । अस्तु चैवं, तथापि कृतिसाध्यताज्ञाने इष्टसाधनत्वमेव व्यावर्तकमस्तु स्व-परकीयेष्टसाधनताज्ञान-फलकामनाज्ञानापेक्षया लघुत्वात् इष्टसाधनताज्ञानज्ञानस्य फलकामनाज्ञानस्य च हेतुत्वे मानाभावाच्च ।

नव्यास्तु स्वकृतिसाध्यताज्ञानमेव प्रवर्तकं तेन स्वकृत्यसाध्ये वृष्ट¬ादौ कारीर्याञ्च कृषीवलस्य न प्रवृत्तिः । न च सञ्जातबाधस्य विषभक्षणे प्रवृत्तिप्रसङ्गः, स्वकृतिसाध्यताज्ञानविषये इष्टत्वस्य स्वरूपसतः प्रवृत्तौ सहकारित्वात् । न च सञ्जातबाधस्य विषभक्षणादाविच्छास्ति, इष्टसाधनत्वेनाज्ञानात् अतीतभोजनेऽप्यतएव न प्रवर्तते तृप्तेः सिद्धतया इच्छाविरहेण भोजने तदुपाधिकेष्टत्वाभावादतीततृप्ताविच्छा

नास्तीति तत्साधनेऽपीष्टत्वाभावादेव न प्रवृत्तिः । न चैवं पाके न प्रवर्तेत तस्य स्वरसतइष्टत्वाभावादिति वाच्यम् । इष्टसाधनत्वज्ञानेन तस्यापीष्टत्वात् । हन्तैवं प्राथमिकत्वादिष्टत्वार्थमवश्यापेक्षणीयत्वाच्च कृतिसाध्यत्वे सतीष्टसाधनताज्ञानमेव चिकीर्षाकारणमस्त्विति चेत्, न, इष्टासाधनत्वाभावेऽपि भोगे चिकीर्षासत्त्वात् तस्यां स्वकृतिसाधनत्वाभावेऽपि भोगे चिकीर्षासत्त्वात् तस्यां स्वकृतिसाध्यत्वज्ञाने सतीष्टत्वमेव कारणं न त्विष्टसाधनत्वं व्यभिचारात् । पाकादौ तदन्वय-व्यतिरेकावपीष्टत्वोपक्षाणौ, एवं भोगेऽपि प्रवर्तेतेति चेत्, न, इष्टसाधनतापक्षेऽपि मुक्तिरूपेष्टसाधने सुखे प्रवर्तेतेति तुल्यम् । सुखे चिकीर्षा भवत्येव कृतिस्तु न भवति कृतेः ।

सिद्धवृत्त्यसिद्धक्रियाविषयत्वनियमादिति चेत्तुल्यम् । तस्मात् स्वकृतिसाध्यत्वं विधिरिष्टत्वं सहकारीति, मैवं, इष्टसाधनताज्ञानस्योपायेच्छायां हेतुत्वावधारणात्तस्यास्तज्जन्यत्वनियमादिच्छायाः स्वविषयेच्छानुत्पादकत्वनियमाच्च । ननु सिद्धौदनः कुतः पाके न प्रवर्तते, ओदनमात्रस्य सिद्धत्वेनेष्टत्वाभावात् । अतएवातीतभोजनादौ न प्रवर्तते अतीततृष्णादाविच्छाविरहात् । ननु सामुद्#्कवि#ाख्याते भावियौवनरोज्ये भोगसाधने स्वकृतिसाध्यत्वे सतीष्टसाधनत्वज्ञानात् कुतो न प्रवर्तते, भाविराज्यस्यासिद्धत्वात् प्रवत्तेः सिद्धविषयत्वनियमात् राज्योपायापरिचयाच्च । तत्परिचये च प्रवर्तत एव देवताराधनादाविति चेत्, न, सिद्धे चिकीर्षाविरहेण यागादावप्यप्रवृत्तिप्रसङ्गात् देवताराधनादेरप्यसिद्धत्वे न तत्राप्यप्रवृत्तिप्रसङ्गाच्च । किञ्च राज्योपयापरिचये तत्र मा प्रवर्त्तिष्ट स्वकृतिसाध्येष्टसाधनत्वेन ज्ञाने राज्ये प्रवृत्तिप्रसङ्गे किमायातं । न हि कृतिसाध्येष्टसाधनत्वेन ज्ञानेऽपि तदुपायज्ञानं तत्र प्रवर्तकं गौरवात् भिन्नविषयत्वाच्चेति चेत् मैवं यौवने हि यावत् प्रवर्तत एव राज्ये बाल्ये त #ु राज्योपायमकृत्वा मत्कृत्येदानीं राज्यं न सिद्ध्यतीति स्वकृत्यसाध्यताज्ञानादेव न प्रवर्तते यथा तण्डुलं विना पाके स्वकृत्यसाध्यताज्ञानात् राज्योपाये तु स्वकृतिसाध्येष्टसाधनत्वेन ज्ञाते देवताराधनादौ प्रवर्तत एव । अतएव व्रीह्यवघातमकृत्वा पुरोडाशस्तमकृत्वा यागस्तमकृत्वाऽपवूर्वं साधयितुं न शक्यत इति क्रमशोऽवघातादौ प्रवर्तते न युगपत् सिद्धवृत्त्यसिद्धक्रियाविषयाविषयस्वभावत्वात् प्रवृत्तेः यागानन्तरञ्च नापूर्वे प्रवर्तते । कृत्यन्तरं विनैव यागकृतितस्तत्सम्भवात् । इष्टसाधने चेष्टोत्पत्तिनान्तरीयकदुःखाजनकत्वं विशेषणं न तु तज्ज्ञानाभावः कारणं किन्तु तदेव विषयतया कारणतावच्छेदकं लाघवात् तेन मधु-विषसम्पृक्तान्नभोजने न प्रवृत्तिः, परेणापि प्रवृत्तिपूर्वं लिङ्गविशेषणत्वेन अन्यथा वा तज्ज्ञानविनियोगस्वीकारात् । एवञ्चाल्पायाससाध्यादिष्टोत्पत्तिसम्भवे बह्वायाससाध्ये न प्रवृत्तिः । अतएव श्रुतस्वर्गफलकत्वेऽपि बहुवित्तव्ययाससाध्ये ज्योतिष्टोमादौ फलभूमा कल्पने अन्यथाल्पायासासध्यादेव स्वर्गसिद्धिसम्भवे तत्राप्रवृत्तौ अननुष्ठानलक्षणमप्रामाण्यं तद्विधेः स्यात् ।

बलवदनिष्टाननुबन्धित्वञ्च न विशेषणं बहुवित्तव्यययायाससाध्यबहुतरदुःखस्याप्यबलवत्त्वं क्वचिदल्पदुःखस्यापि बलवत्त्वं । तस्याप्युक्तातिरिक्तस्याननुगमात् । आस्तिकस्य निषिद्धत्वेन ज्ञातेऽपि प्रवृत्तिः राग-द्वेषयोरुत्कटत्वेन नरकसाधनत्वज्ञानतिरोधानात् । ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थनिषेधानुपपत्तिः तद्भक्षणस्य तृप्तिरूपेष्टसाधनत्वात् । न चासुराविद्यादिवत् पर्युदासलक्षणया विरोध्यनिष्टसाधनत्वबोधनं नञोऽसमस्तत्वात् क्रियासङ्गतत्वेन प्रतिषधवाचकत्वव्युत्पत्तेश्चेति चेत् न विशेष्यवति विशिष्टनिषेधस्य सविशेषणे हीति न्यायेन विशेषणनिषेधपर्यवमायितया कलञ्जभक्षणमिष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तदुःखसाधनमिति न कलञ्जं भक्षयेदित्यनेन बोधनात् । इष्टसाधनतावाचकस्य सिद्धेः सामान्यतो निषेधानुपपत्तेर्बलवदनिष्टाननुबन्धीष्टसाधनत्वविशेषनिषेधतात्पर्यं तथाचाशक्यविशेषनिषेधपरत्वं नञ इति कश्चित् ।तन्न । यथा ह्ययोग्यतया सच्छिद्रं विहाय घटत्वेन तदितरान्वयो न तु छिद्रेतरत्वेन युगपद्वृत्तिद्वयविरोधात् तथात्रापि बलवदनिष्टाननुबन्धित्वेनानुपस्थितौ कथं तन्निषेधः । श्येनेनाभिचरन् यजेतेत्यत्र कथं विधिप्रवृत्तिः हिंसाया बलवदनिष्टानुबन्धित्वात् इति चेत् तत्र कृतिसाध्यत्वे सतीष्टसाधन्त्वमेव योग्यतयान्वेति न तु बलवदनिष्टाननुबन्धित्वमपि अयोग्यत्वात् । निन्दार्थवादेन प्रायश्चित्तोपदेशेन च हिंसाया बलवदनिष्टानुबन्धित्वावगमात् । अतएव विहितेऽ #िपश्येने विगानान्न तात्विकप्रवृत्तिः । राग-द्वेषयोरुत्कटत्वेनानिष्टानुबन्ध्यंशस्य तिरस्कारात् । कस्यचित् प्रवृत्तिरित्येके । अन्ये त्वभिचारस्य वैरिबधफलकत्वेन श्रुतत्वात् बधसाधनत्वेन श्येनो विधीयते न तु बधसाध्यनरकसाधनत्वेन नरकस्य फलत्वेनाश्रुतेः । न च जनकजनकस्य जनकत्वनियमः कुम्भकारपितृपरम्परायाः कुम्भजनकत्वापत्तेः विधिनैव श्येनस्य बलवदनिष्टाननुबन्धित्वबोधनाच्च । न च श्येनस्य बलवदनिष्टाननुबन्धित्वबोधनाच्च । न च श्येनस्य नरकाहेतुत्वे अपेक्षितवैरिबधहेतुत्वे वा अविगानेन प्रवृत्तिः स्यादिति वाच्यम् । श्येनाद्बधो बधाच्चावश्यं नरक इति प्रतिसन्धानेन विगानात् ।

ननु श्येनोमरणफलकव्यापारत्वेन हिंसा सा च नरकजनिकेति चेत् न न हि साक्षात् परम्परासाधारणमरणफलकव्यापारो हिंसा कूपादौ विनष्टे गवि तत्कर्त्तुर्गोबधकर्त्तुत्वापत्तेः बध्यस्यापि हन्तुर्मृत्यूत्पादनद्वारेणात्महन्तृत्वप्रसङ्गाच्च । न हि अनुत्पादितमन्युः कश्चित् कमपि व्यापादयति किन्त्वनुनिष्पादिमरणफलकोव्यापारो हिंसा यदनन्तरं मरणं भवत्येव । न च श्येनस्तथा किन्तु खङ्गहननादिकमेव। अथ मरणानुद्देशेन क्षिप्तनाराचाद्धतब्राह्मणे च हिंसा न स्यात् । किञ्च हिनस्तिधात्वर्थे अवच्छेदकं फलमव्यवहितमेव मरणं अव्यवहितफलकस्यैव व्यापारस्य धातुवाच्यत्वात् अन्यथा परम्परया विक्लिप्तिफलकान्नकामेष्टतण्डुलक्रयादावपि पचतीतिप्रसङ्गात् । एवं खङ्गाभिघातानन्तरं यत्र विलम्बेन मरणं व्रणपाकपरम्परया वा अन्ने विषप्रयोगेण वा तत्र हन्तृत्वं प्रायश्चित्तादि च न स्यात् इति चेत् न प्रायश्चित्ततुल्यतार्थं हि तत्र हन्तृव्यदेशो गौणः विनिगमकञ्च लाघवमेव । वस्तुतस्तु मरणोद्देशेन कृतोऽदृष्टाद्द्वाराकस्तदनुकूल व्यापारो हिंसा । कूपादौ विनष्टे गवि तत्कर्तुर्गोबधकर्तुत्वापत्तेः बध्यस्यापि हन्तुर्मुत्यूत्पादनद्वारेणात्महन्तृत्वप्रसङ्गाच्च । न हि अनुत्पादितमन्युः कश्चित् कमपि व्यापादयति किन्त्वनुनिष्पादिमरणफलकोव्यापारो हिंसा यदनन्तरं मरणं भवत्येव । न च श्येनस्तथा किन्तु खङ्गहननादिकमेव । अथ मरणानुकूल्यव्यापारो मरणोद्देशेनानुष्ठीयमानो हिंसा श्येनश्च तथा कूपादौ च न मरणोद्देशेनानुष्ठीयमानत्वमिति चेत् न एवं सति गौरवात् मरणानुद्देशेन क्षिप्तनाराचाद्धतब्राह्मणे च हिंसा न स्यात् । किञ्च हिनस्तिधात्वर्थे अवच्छेदकं फलमव्यवहितमेव मरणं अव्यवहितफलकस्यैव

व्यापारस्य धातुवाच्यत्वात् अन्यथा परम्परया विक्लित्तिफलकान्नकामेष्टतण्डुलक्रयादावपि पचतीतिप्रसङ्गात् । एवं खङ्गाङिघातानन्तरं यत्र विलम्बेन मरणं व्रणपाकपरम्परया वा अन्ने विषप्रयोगेण वा तत्र हन्तृत्वं प्रायश्चित्तादि च न स्यात् इति चेत् प्रायश्चित्ततुल्यतार्थं हि तत्र हन्तृव्यपदेशो गौणः विनिगमकञ्च लाघवमेव । वस्तुतस्तु मरणोद्देशेन कृतोऽदृष्टाद्वारकस्तदनुकूल्यव्यापारो हिंसा श्येनश्चादृष्टद्वारकस्तनुकूल्यव्यापारो हिंसा श्येनश्चादृष्टद्वारा मरणसाधनमतो न हिंसा । यदि चादृष्टद्वारापि मरणसाधनं हिंसा स्यात् तदा सप्तमीतैलाभ्यङ्गस्यादृष्टद्वारा इष्टभार्यविनाशहेतुत्वादभ्यङ्गकर्तुर्हिंसकत्वापत्तिः । अतएव कूपादौ गोमरणेऽपि न बधकर्तुत्वं तत्कर्तुः गललग्नान्नमरणे न भोक्तुर्न वा परिवेषयितुरात्महन्तृत्वं ब्राह्महन्तृत्वं वा व्रणपाकपरम्परया विलम्बेन विषप्रयोगेण च हन्तृत्वं मुख्यमेव न त्वनुनिष्पादिमरणफलकत्वं गललग्नान्नमरणे स्वहन्तृत्वापत्तेः । अन्योद्दशेन क्षिप्तनाराचेन हते ब्राह्मणे ब्राह्महन्तृत्वं स्यादिति चेत्, न, इष्टापत्तेः व्यपदेशस्तु गौणः प्रयोगोलक्षणयापि समर्थयितुं शक्यते तत्पक्षेऽतिप्रसङ्गोवारयितुं न शक्यत इतीदमेव विनिगमकं । अतएव

अतदुद्देशेन कृतेऽपि निषिद्धे प्रायश्चित्तार्द्धमुक्तम् ।

अपरे तु अनभिसंहितनरान्तरव्यापारमद्वारीकृत्यमरणसाधनं हिंसा खङ्गकारस्यानभिसंहितनरान्तरव्यापारद्वारा मरणसाधनत्वं तस्य हि नरान्तरव्यापारद्वारा मरणसाधनत्वं तस्य हि नरान्तरव्यापारो नाभिसंहितः किन्तु धनलाभ इति खङ्गकारो न घातकः । विषस्यान्ने प्रक्षेपेण नरान्तरव्यापारो भोजनमेवाभिसंहितः अनेनेदं भोक्तव्यमित्यभिसन्धाय विषप्रयोगादिति हिसैवान्ने विषप्रयोग इति । तन्न । गललग्नकवलाद्यत्र मरणं तत्र परिवेषयितुर्घातकतापातात् अनेनेदं भोक्तव्यं इत्यभिसन्धाय परिवषणाद्भोक्तुरात्महन्तृत्वापत्तेश्च अनभिसंहितनरान्तरव्यापारमद्वारीकृत्य मरणानुकूलान्नंभक्षणानुष्ठानात् । अतएवाव्यवहितप्राणवियोगफलको व्यापारो हिंसा व्रणपाकपरम्परा मृते तु हन्तृत्वं व्यापारस्याव्यवधायकत्वादिति निरस्तम् ।

स्यादेतत् नेष्टसाधनता विधिः नित्ये सन्ध्योपासनादौ फलाभावात् । अथ नास्त्येव तत् नित्यं यत्रार्थवादादिकं विधिवाक्ये वा न फलं श्रुतमस्ति *सन्ध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्राह्मलोकं सनातनं* इत्याद्यर्थवादात् *दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्*इत्यादिविधिवाक्यश्रवणाच्च, कृत्वाचिन्तयातूच्यते , यत्र न फलश्रुतिस्तत्र विश्वजिन्नयायात् स्वर्गः फलमिति चेत्, न, कामनोपाधिकार्यत्वेन यागवन्नित्यताभङ्गप्रसङ्गादहरहः श्रुत्या हि तत्कालजीविमात्रकृतिसाध्यं सन्ध्यावन्दनमवगतं हि कामनोपाधिकार्यत्वे च यदा फलकामना नास्ति तदा तत्समय एव तत्कर्तव्यता न स्यात् न हि तत्काले फलकामनावश्यम्भावः प्रमाणभावात् । किञ्च प्रथमप्रवृत्तेतरनिरपेक्षाहरहः श्रुत्या जीविमात्रस्याधिकारोऽवगतस्तथाच तत्सापेक्षचरमप्रवृत्त्यर्थवादोपनीतफलकामस्य न तत्राधिकारः प्रथमप्रवृत्ताहरहःश्रुतिविरोधान्नित्ये फलश्रुतेरर्थवादस्य च स्तुतौ तात्पर्यम् । अतएव प्रत्यवायपरिहारोऽपि न फलं तत्कामनोपाधिकार्यत्वे नित्यताक्षतेः । किञ्च नित्ये कर्तव्यताबोधनात् प्राक् न प्रत्यवाये प्रमाणमस्ति विधेः कर्तव्यत्वमवगम्य कर्तव्याकरणे प्रत्यवायकल्पनं येनान्योन्याश्रयः किन्तु निन्दार्थवादेन प्रायश्चित्तोपदेशेन चोपासनस्य प्रकृत्यर्थस्य तावद्व्यापारस्वरूपस्याभावः प्रत्यवायहेतुरवगतः तथाच सन्ध्योपासनाभावः प्रत्यवायद्वारा दुःखसाधनं तदभावः सन्ध्योपासनं दुःखसाधनाभवत्वेन फलं प्रायश्चित्ते पापध्वंसवदिति तत्साधनत्वेन कृतिर्बोध्यते विधिना । न चैवं प्रत्यवायपरिहार एव फलमस्त्विति वाच्यम् । परिहारस्य प्रागभावरूपत्वेन अनादितया असाध्यत्वात्। न च उपासनाकरणं प्रत्यवायहेतुर्नोपासनाभावः तथाच दुःखसाधनाभावत्वेन कृतिरिष्टा न तूपासनमिति वाच्यम् । निन्दार्थवादस्योभयत्र सत्त्वेन उभयस्यापि तथात्वादिति तन्न एवमपि काम्यत्वे नित्यताक्षतिप्रसङ्गात् । किञ्च अकुर्वन् विहितं कर्मेत्यादिना नोपास्ते यश्च पश्चिमामित्यादिना च करणाभावस्यैव प्रत्यवायहेतुत्वं बोध्यते न तु तद्विषयाभावस्य अन्यथा अकर्तुः प्रत्यवायो नान्यस्येति कथं स्यात् विषयाभावस्य साधरण्यात् । वस्तुतस्तु कृतिसाध्यत्वे सतीष्टसाधनताज्ञानं प्रवर्तकत्वेन निर्व्यूढं । न च कृतौ कृतिसाध्यत्वमस्तीत्यतो न किञ्चिदेतत् ।

नव्यास्तु नित्यापूर्वप्रागभावो दुरितद्वारा दुःखसाधनं तदभावोऽपूर्वं दुःखसाधनाभावत्वेनेष्टं तत्साधनत्वेन कृतिसाध्यत्वेन च सन्ध्योपासनं विधीयते इति तन्न निन्दार्थवादादिना सन्ध्योपासनाभावस्तदकरणं वा प्रत्यवायहेतुरवगतो न त्वपूर्वाभावः प्रथमं प्रमाणाभावेन तदनुपस्थितेः विधेः इष्टसाधनत्वबोधकत्वात् परिशेषेणापूर्वमिष्टं कल्प्यत इति चेत् तर्हि विश्वजिन्नयायेन स्वर्ग एव फलं कल्प्यतां काम्यत्वस्य त्वयापि स्वीकारात् किञ्च विधिप्रवृत्तावपूर्वज्ञानं अपूर्वज्ञाने च विधिप्रवृत्तिरित्यन्योन्याश्रयः ।

यावन्नित्य-नैमित्तिकनिर्वाहस्य तत्तदाश्रयमविहितकर्मणां सम्यक्परिपालनस्य च ब्राह्मलोकावाप्तिः फलं श्रूयते तथाच नित्यस्य सफलत्वमिति केचित् । तन्न । तस्य विधेर्नित्यविधिमुपजीव्य प्रवृत्तिस्तस्य च फलाभावेन प्रथमं मूकत्वात् अन्यथा परस्परसापेक्षत्वेनान्योन्याश्रयः तस्मात् कार्यतैव विधिः । ननु नित्ये वेदात् कार्यताज्ञानेऽपि प्रयोजनज्ञानं विना कथं प्रवृत्तिः न हि प्रयोजनमुद्दिश्य मन्दोऽपि प्रवर्तते इति चेत् न नित्ये फलबाधेन प्रवृत्तिमात्रे प्रयोजनज्ञानस्याप्रयोजकत्वात् काम्येऽपि प्रयोजनज्ञानं न साक्षात् प्रवर्तकं उपायविषयत्वात् प्रयोजनेऽप्रवृत्तेश्च किन्त्विष्टसाधनताज्ञानद्वारा कार्यताज्ञाने उपक्षीणमेव कथमयं निश्चयः नित्ये इष्टसाधनताज्ञानासम्भवात् कार्यताज्ञानस्य वेदादपि सम्भवात् । ननु निष्फले दु#ुःखैकफले वा प्रेक्षावतां कथं प्रवृत्तिः वेदाधीनकार्यताज्ञानसत्त्वात् सफलप्रवृत्तावपि तस्यैव तन्त्रत्वात् । यत्तु लौकिके निष्फले दुःखैकफले वा न प्रवर्तते तदिष्टसाधनतालिङ्गकस्य

कार्यताज्ञानस्य वेदाधीनस्य वा अभावात् । न च दुःखैकफलत्वज्ञानं प्रवृत्तिप्रतिबन्धकं सति कार्यताज्ञाने तस्य प्रतिबन्धकत्वादर्शनात् । अथ वा काम्ये लिङ्गोऽपूर्ववाचत्वान्नित्येऽपि लिङ्गोपासनादिविषयकमपूर्वं बोध्यते तच्च निष्फलमपि स्ततएव सुखवत्प्रयोजनं नित्यमभ्यर्थ्यमानञ्चेति । उच्यते । सर्वत्र नित्ये फलश्रवणजीविफलकामस्य सम्बलिताधिकारः यथोपरागे नैमित्तिकं स्नान-श्राद्धादि फलश्रुतेः काम्यं अकरणे प्रायश्चित्तादिश्रुतेश्च नियतकर्तव्यताकं यथा वा षोडशश्राद्धस्य प्रेतत्वविमुक्तिकामनाश्रुतेः प्रेतत्वविमुक्तिहेतुषोडशश्राद्धे

सङ्कल्पं विधाय महाजनानामाचारात् काम्यत्वं निन्दार्थवादेनाकरणे प्रत्यवायश्रुतेरवश्यकर्तव्यत्वं तथा सन्ध्योपासनमपि फलश्रुतेः काम्यं अकरणे नरकश्रुतेः प्रायश्चित्तोपदेशाच्च नियतकर्तव्यताकत्वं तदकरणे प्रायश्चित्तानुपदेशात् । न च । नित्ये फलकामनाया असम्भवः त्रिकालकम्यस्तवपाठवत् नित्ये फलकामनासम्भवात् । यत्तु प्रथमप्रवृत्ताहरहःश्रुत्या तत्कालजीविमात्रस्याधिकारबोधनात् न फलकामस्याधिकार इति तन्न अहरहःश्रुत्यर्थवादयोः प्रथमगृहीतैकवाक्यताबलेन तत्कालजीविफलान्वयं विनैकवाक्यताङ्गात् । न चार्थवादस्य स्तुतिपरत्वान्नैकवाक्यता बाधकं विना स्वार्थपरित्यागात् विधिवावाक्योपस्थिते फले विधिवाक्यस्थफलमादायैवाहरहःश्रुत्या कार्यताबोधनात् । नन्वेवं तत्कालजीविकामिनोऽधिकारे यदा फलकामनाविरहस्तदा अशुचेरिवाधिकाराभावान्नियतकर्तव्यता न स्यात् अधिकृताकरणे प्रत्यवायो न त्वकरणमात्र इति चेत् न नैमित्तिकेऽपि तत्काले कस्यचित्कामनाविरहिणोऽनियतकर्तव्यतापत्तेः । अथापवादाभावेनौत्सिकी फलकामनास्त्येव फलज्ञानस्य स्वविषयकेच्छाजनकस्वभावात् यस्य तु मुमुक्षापवादेन फलान्तरे कामना नास्ति तस्याकरणेऽपि न प्रत्यवाय इति न तन्नियतकर्तव्यताकत्वं नैमित्तिके तथा नित्येऽपि मुमुक्षया फलकामनाबाधेनाकरणेऽपि न प्रत्यवाय इति तुल्यम्। किञ्चार्थवादोपस्थितफलोपाधिकर्तव्यत्वेऽवगते अकुर्वन् विहितं कर्मेत्यादिवाक्याच्छौचे सति सन्ध्यावन्धाकरणे निन्दार्थवादेन च नरकश्रुतेः प्रायश्चित्तोपदेशाच्च प्रत्यवायः कल्प्यते तत्फलकामनाविरहेऽपि प्रत्यवायपरिहारार्थं नियमतः प्रवर्तते विधिप्रवृत्त्यनन्तरं प्रत्यवायस्य प्रामाणिकत्वात् अकरणोन्मुखस्य करणेन प्रत्यवायप्रगाभावस्य साध्यत्वात् नैमित्तिके फलोपाधिकर्तव्यत्वे कामनाविरहेऽपि नियतकर्तव्यतावत् ।

यत्तु निष्फलेऽपि नित्ये वेदादीनकार्यताज्ञानात् प्रवर्तत इति तन्न दुःखैकफलत्वेन ज्ञायमाने प्रेक्षावतां कृतेरनुत्पादनियमात् अयोग्यतया नित्ये कृ#ीतिसाध्यत्वस्य बोधयितुमशक्यत्वात् । अत एव सन्ध्योपासनफलमपि क्रियते वेदबोधितकर्तव्यताकत्वादित्याशङ्क्य गुरुमतमेतन्न गुरोर्मतमित्यभिप्रायेणोपेक्षितवानाचार्यः । यत्तु पाण्डापूर्वं स्वत एव प्रयोजनं इत्युक्तं तदपि न एवं तवापि काम्यत्वे नित्यत्वहान्यापत्तेः । किञ्च सुखं दुःखाभावश्च मुख्यं प्रयोजनं तत्साधनञ्च गौणं नित्यापूर्वन्तु प्रयोजनं । प्रवर्तकविध्यनुरोधेन तदपि प्रवर्तकं कल्प्यत इति चेत् । न । प्रवर्तनीयेन लोकेन तस्य प्रयोजनत्वेनाज्ञानात् गुरुणा नित्यापूर्वं प्रयोजनमुक्तं इत्युच्यमानेऽपि नादरः प्रेक्षावतां । मुक्ति-स्वर्गौ चालौकिकावपि सुख-दुःखाभावसजातीयतया प्रयोजने तस्मादेवं वदन् गुरुरपि लघुरेव । तदयं सङ्क्षेपः नित्ये दुःखैकफलत्वेन प्रवृत्त्यनुपपत्तेः फलोपाधिकर्तव्यता तच्च फलं दुःखसाधनाभावः पाण्डापूर्वं वेति तदिच्छा प्रवृत्त्यर्थं प्रत्यहमुपेया तां विना प्रवृत्त्यनुपपत्तेः तथाचार्थवादिकं विधिवाक्यश्रुतञ्च फलमस्तु कृतमन्येन । न च कामनाविरहे नियतकर्तव्यता न स्यात् अपूर्वादीच्छाविरहेऽपि तुल्यत्वात् प्रत्यवायपरिहारार्थं नियमतः प्रवृत्तिस्तुल्यैव । यत्र च न फलश्रुतिस्तत्र विश्वजिन्नयाय इति । नन्विदमिष्टसाधनमिति ज्ञानादेतत्साध्यमिष्टमिति ज्ञानाच्च प्रवृत्तिदर्शनात् प्रथमस्यैव प्रवर्तकत्वे किं विनिगमकं उच्यते फलेच्छायां स्वविषयविशेष्यकज्ञानस्य हेतुत्वेन क्लृप्तत्वात् उपायचिकीर्षापि बाधकं विना तथा। वस्तुतस्तु कृतिसाध्ययागस्य साध्य इष्ट इति ज्ञानस्य प्रवर्तकत्वे यजेतेतिपदात् प्रथमं कृतिसाध्यो याग इति ज्ञानं ततः कृतिसाध्ययागस्य साध्य इष्ट इति ज्ञानं विशेषणज्ञानसाध्यत्वात् विशिष्टज्ञानस्येति ज्ञानद्वयं तव, मम तु यागः कृतिसाध्य इष्टसाधनमित्येकमेव ज्ञानं । न च कृतिसाध्यत्वं यागे बोधयित्वा कृति#ासाध्ययागस्य साध्य इष्ट इति लिङ्गा बोधयितुं शक्यमपि एकस्वार्थान्वयमपरपदार्थे बोधयित्वा तदन्वितापरस्वार्थान्वयबोधकत्वस्य पदेऽव्युप्तत्तेः यजिपदे च कृत्या सह यागान्वयं बोधयित्वा तदन्वितापरस्वार्थान्वयबोधकत्वस्य पदेऽव्युत्पत्तेः यजिपदे च कृत्या सह यागान्वयं बोधयित्वा पर्यवसिते पुनः स्वार्थान्वयबोधकत्वे आवृत्तिप्रसङ्गः ।

अथ साध्यमिष्टं यस्येति साध्येष्टकत्वं शक्यं तथाच बहुव्रीह्यर्थापेक्षया इष्टस्य साधनमिति पद्यर्थस्य लघुत्वात्तदेव शक्यम् । किञ्च तत्साध्यत्वं न नियमतस्तदुत्तरसत्त्वं दण्डसाध्ये घटे व्यभिचारात् नापि तदवच्छिन्नक्षणोत्तरक्षण एव सत्त्वं एवकारव्यवच्छेद्यतदनुत्तरसमयस्याकाशेऽप्रसिद्धेः शब्दस्य

तदसाध्यत्वापत्तेः । अतएव न तदभावव्यापकाभावप्रतियागित्वं रूपे रससाध्यत्वापत्तेश्च । नापि तदवधिकोत्तरत्वव्याप्यसमयसम्बन्धः उत्तरत्वव्याप्यत्वं ह्युत्तरत्वानधिकरणकालावृत्तित्वं तच्चाकाशेऽप्रसिद्धं गुरुतरञ्च । तस्मात् तत्साधनकत्वमेव तत्साध्यत्वं एवञ्च लाघवात् तत्साधनत्वज्ञानमेव प्रवर्तकं न तु तत्साधनकत्वज्ञानमिति । स्यादेतत् इष्टत्वज्ञानस्य प्रवर्तकत्वे तृप्तोऽपि भोजने प्रवर्तेत मनसा तृप्तेरिष्टत्वज्ञानात् । अथ स्वरूपसत्यपि फलेच्छा कारणं सा च सिद्धतया तृप्तौ नास्तीति चेत् तर्हि हन्तैवमावश्यकत्वात् फलेच्छैव कारणं न तु तज्ज्ञानं गौरवात् । किञ्च इच्छाज्ञानस्य कारणत्वे इच्छा कारणं न स्यात् स्वज्ञानेन तन्नाशात् इच्छा तज्ज्ञानधाराकल्पनेऽनवस्थानात् । अपि चेच्छाविषयः सुखं इति ज्ञानं न मानसं सुखस्यासिद्धतया तद्विशेष्यकसाक्षात्कारस्य तत्सन्निकर्षं विना अभावात् ओदनादावपीष्टत्वज्ञानं न सम्भवति मनासोबहिरस्वातन्त्र#ात् । नापि चक्षुरादिना ज्ञातः कृत इतिवत् इष्टत्वज्ञानं तत्र विशेष्यसन्निकर्षात् । वस्तुतस्तु इष्टस्य विशिष्य सुखत्वादिना अज्ञाने याग पाकादाविष्टसाधनताज्ञानेप्यप्रवृत्तिप्रसङ्गः इष्टस्यापल्पाधिकभावेन नानाप्रकारत्वेन च विशिष्यानध्यवसायात् । न चेष्टविषयतावच्छेदकसुखत्वादेरुपलक्षणमिष्टत्वं सुख-दुःखाभाव-तत्साधनेषु अनुगतस्योपलक्ष्यस्याभावेनाननुगमादिति । उच्यते । यत्रेच्छा तत्साधनताज्ञानमेव लोकवेदसाधारणं प्रवर्तकं तेषां सुख-दुःखाभाव-तत्साधनत्वेनेच्छाविषयाणां अननुगतानामपि वस्तुसदिच्छाविषयत्वमेवानुगमकं एवं यदा सुखादाविच्छा भवति स्वकृतिसाध्यत्वे सति सुखादिसाधनमिति ज्ञानं तदा पाकादौ प्रवर्तते । नन्वेवं प्रवर्तकज्ञानविषस्य नानात्वेन तच्छक्तस्य विधिप्रत्ययस्य नानार्थत्वप्रसङ्ग इति चेत् न सुखत्वादिनाननुगतं इष्टत्वेनानुगतं फलं प्रति साधनत्वस्य यागादेर्लिङ्गादिना बोधनात् तथा च फलानामनुगमार्थं फलेच्छा शक्या न त्विच्छा ज्ञानकारणत्वेन । अथैवं सुखादिसाधनत्वेन

ज्ञानं प्रवर्तकं तन्न शक्यं अननुगमात् यच्च शक्यमिष्टसाधनत्वं तज्ज्ञानं न प्रवर्तकं इति विधेः प्रवर्तकता न स्यात् इति चेत् साक्षादेवमेव किन्त्विष्टसाधनं यागइति लिङ्गा बोधिते इष्टाकाङ्क्षायां काम्यत्वेन श्रुतः स्वर्ग एव इष्टत्वेनावगम्यते तदनन्तरं स्वर्गकामपदसमभिव्याहारात् स्वर्गसाधनं याग इति ज्ञानं प्रवर्तकमुत्पद्यते। एवञ्च विधिजन्यज्ञानजन्यं ज्ञानं प्रवर्तकम्।

यत्तु सर्वेषामेव विधेर्न साक्षात् प्रवर्तकं विधिबोधकात् स्वकृतिसाध्यत्वादेरनवगमात् स्वेष्टसाधनत्वञ्च अहं इष्टसाधनयागकः स्वर्गकामत्वाद्दर्शवाक्यावगतस्वर्गकामवदित्यनन्तरमर्थात् प्रतीयते । तन्न । यत्रेच्छा तत्साधनमिति शाब्दज्ञानादेव प्रवृत्त्युपपत्तेस्तत्प्रतीतिर्निष्फला।

अन्ये तु साधनत्वमात्रं विध्यर्थः स्वर्गादिसाधनतालाभस्तु समभिव्याहारात् इष्टसाधनतापक्षेऽपि तस्योपजीव्यत्वात् तथाहि यजेतेत्यनेन यागः कृतिसाध्यः साधनञ्चेति बोधिते साधनस्य साध्याकाङ्क्षायां कामनाविषयत्वेन श्रुतीऽसिद्धः स्वर्ग एव साधनाकाङ्क्षो साध्यत्वेनावगम्यते उपस्थितत्वात् । न च यागस्य साधनाकाङ्क्षा कृतिसाध्यत्वेनैवोपस्थितेः । अतएव विश्वजिदादौ स्वर्ग एव साध्यत्वेन कल्प्यत इति । इष्टसाधनताविधिपक्षेऽपि *तरति मृत्युं तरति ब्राह्हत्यां योऽश्वमेधेन यजते* इत्याद्यर्थवादे विधिकल्पनमिति चेत् । न । अविनाभावात् तथाभूतसाधनत्वस्य विधेयत्वव्याप्तत्वात् व्यापकानुपलम्भबाधोदद्वाराय वा प्रयोजनाभावान्न तत्कल्पनं तत्रेत्यप्याहुः।

यत्त्विष्टसाधनत्वाभिधाने करणे लिङ्गोऽनुशासनात् दर्श-पौर्णमासाभ्यामित्यनभिहिताधिकारविहिता तृतीया न स्यादिति । तन्न । उपायतामात्राभिधानेऽपि तद्विशेषकरणत्वानभिधानात्। वस्तुतस्त्वभिहितान्वयलभ्यं यागेष्टसाधनत्वं इष्टसाधनत्वमात्रस्य विध्यर्थत्वात्।

नव्यास्तु चिकीर्षाद्वारा ज्ञानस्य कृतौ हेतुता चिकीर्षा च कृताविच्छा सनः प्रकृत्यर्थगोचरेच्छावाचित्वात् पिपक्षादिवत् । न तु कृतिविषयपाकादिविषये कृतिसाध्यत्वप्रकारकेच्छाभिधायकत्वं पाकादेः प्रकृत्यनभिधेयत्वात् । न हि कृतिवाचकस्य तद्विषयवाचकत्वं करोतीत्युक्ते तद्विषयसंशयात्। एवञ्च कृताविच्छेष्टसाधनताज्ञानात् तत्साध्येष्टज्ञानाद्वा वृष्ट¬ादौ तथा कल्पनात्। यदा च कृताविच्छा तदा सैव चिकीर्षा अन्यत्रेच्छामात्रं न तु कृतिसाध्यताज्ञानात् कृतौ कृतिसाध्यत्वाभावात् । अथ पाकं कृत्या साधयामीतीच्छानुभवसिद्धा अनुभवापलापे उपेक्षणीयत्वापत्तेः सा च कृतिसाध्यताज्ञानात् सा च चिकीर्षापदाप्रतिपाद्यापि कृतिहेतुः समानविषयत्वात् न तु कृतीच्छा कृतिहेतुः कृतिविषयाविषयत्वादिति चेत् अस्ति तावत्पाककृताविच्छा वृष्टीच्छावत् अस्ति च कृतिसाध्यत्वप्रकारिकेच्छा पाके तथापि कृतीच्छैव कृतिकारणं लाघवात् न तु कृतिसाध्यत्वप्रकारिकेच्छा गौरवात् । धात्वर्थानुपरक्ते कृतिस्वरूपे इच्छैव नोदेतीति चेत् न । पाकादिकृतीष्टसाधनताज्ञानात् पाककृताविच्छा ततः कृतिरित्यभ्युपगमात् । न चावगति -प्रवृत्त्योः समानविषयत्वं उभयसिद्धं तस्यैव विचार्यत्वात्। कथं तर्हि पाकं कृत्या साधयामीतीच्छा यथा वह्नि#ासाध्यत्वेन

इष्टसाधनतावगमात् वह्निना पाकं साधयामीतीच्छा तथा कृतिसाध्यत्वेन इष्टसाधनत्वात् पाकस्य पाकं कृत्या साधयामीतीच्छा अन्यथा तत्तदुपायसाध्यत्वेन इच्छा पाकादौ तत्तदुपायसाध्यत्वप्रकारकज्ञानात् स्यादित्यनन्तकारणकल्पना स्यात् । मम तूपायेच्छायामिष्टसाधनताज्ञानमेव हेतुः क्रियाद्वारा कृतेरिष्टसाधनत्वज्ञाने क्रियाया अपीष्टसाधनत्वं विषयइति कृतीच्छा भवन्ती क्रियाविषयापि भवतीति ज्ञानेच्छाप्रयत्नानां समानविषयतापि । अतएव पाकं चिकीर्षतीति चिकीर्षाविषयतया पाकः प्रतीयते । यद्वा इच्छाविषयविषयतया पाकः प्रतीयते इत तस्य कर्मता ग्रामं जिगमिषति शत्रुं जिघांसतीत्यत्र ग्रामादेरिव, न हि ग्रामादाविच्छा सिद्धत्वात्। अतएव भोगे सुखे च चिकीर्षा तदनुकुलकृतेरिष्टहेतुत्वात् अन्यथा कृतिसाध्येष्टसाधनतापक्षे तच्चिकीर्षासामग्र्यन्तरं कल्प्यते । एवञ्च सन्ध्यावन्दनं दुःखसाधनावन्दनाभावरूपत्वेनेष्टं तत्साधनं कृतिरिति लिङ्गर्थः अन्यथा कृतिर्न कृतिसाध्या सन्ध्यावन्दनञ्च नेष्टसाधनमिति कस्य कृतिसाध्यत्वे सतीष्टसाधनत्वं विध्यर्थः स्यात्। अतएवैकप्रत्ययाभिधेयत्वप्रत्यासत्तेरन्तरङ्गतया विधिप्रत्ययाभिधेयेष्टसाधनत्वस्य कृतावेवान्वयो न प्रकृत्यर्थे तथैव चिकीर्षाकारणज्ञानजनकत्वात् प्रकृत्यर्थस्य च कृतौ विषयत्वेनान्वय इति।

उच्यते। वह्निसाध्यत्वेन कृतिसाध्यत्वेन वा न पाकस्यौदनसाधनता इत्युक्तम्। कथं तर्हि वह्निना पाकं साधयामीतीच्छा इति चेत् न इष्टसाधनत्वेन ज्ञाते यत्र यत्साध्यत्वं ज्ञायते तत्र तत्साध्यत्वेनेच्छा भवतीति यथेष्टसाधनत्वेन ज्ञाते पाके वह्निसाध्यत्वेनावगते इष्टस्य साधनताज्ञानात् कृत्या साधयामीतीच्छा तथाचेष्टासाधनत्वेन कृतिसाध्यत्वेन च ज्ञाते कृतिसाध्यत्वप्रकारिकेच्छा न त्विष्टसाधनताज्ञानमात्रादिति।

अचार्यास्तु प्रवर्तकमिष्टसाधनताज्ञानमेव लिङ्गर्तस्त्वाप्तभिप्रायो लाघवात् पाकं कुर्याः कुर्यामित्यत्र विधिलिङ्गः सम्बोध्य-स्वकर्तृकक्रियेच्छाभिधायकत्वेना ज्ञा-प्रार्थनाशंसनादिलिङ्गो वक्त्रादीच्छाभिधायकत्वेन लिङ्गमात्रस्येच्छावाचकत्वकल्पनाच्च । एवञ्च स्वर्गकामो यजेतेत्यस्य स्वर्गकामस्य कृतिसाध्यतया यागो यागयत्नो वा आप्तेष्ट इत्यर्थः । ततो यो व्यापारः यस्य कृतिसाध्यतया यद्व्यापारविषयकः प्रयत्नो वा यस्याप्तेनेष्यते स तस्य बलवदनिष्टाननुबन्धीष्टसाधनमिति व्याप्तिग्रहात् यागस्येष्टसाधनत्वमनुमिनोति। तथा हि यागो मदिष्टसाधनं मत्प्रयत्नविषयतया आप्तेनेष्यमाणत्वात् यथा मत्पित्रा मत्प्रयत्नविषयतयेष्यमाणं मद्भोजनं मदिष्टसाधनं तथाचेदं तस्मात्तथा । एवं न कलञ्जं भक्षयेदित्यस्य मम कलञ्जभाक्षप्रयत्नो नाप्तेच्छाविषय इत्यर्थः । ततः कलञ्जभक्षणं मम बलवदनिष्टसाधनं मदिष्टसाधनत्वे सत्यप्याप्तेन मत्प्रयत्नविषयतया अनिष्यमाणत्वात् यथा मत्पित्रा मत्प्रयत्नविषयतया अनिष्यमाणणं मधु-विषसम्पृक्तान्नभोजनं मम बलवदनिष्टसाधनं तथाचेदं तस्मात्तथा स चाप्तो वेदव्याख्याता भगवानीश्वर एव। यस्तु वेदे पौरुषेयत्वं नोपैति तं प्रति विधिरेव तावङ्गर्भे इव श्रुतिकुमार्याः पुंयोगे प्रमाणम् । न तर्हि लाघवं तात्पर्यगौरवादीश्वराद्यनन्तकल्पनादिति चेत् न लाघवादिनेच्छाबोधकत्वेन लोके लिङ्गः प्रमाणसिद्धत्वेन फलमुखगौरवस्यादोषत्वात्। न तु कर्तुरस्मरणं बाधकं प्रागेव निरासात् तृप्तिकामनया

विषभक्षणप्रवृत्तस्य विषभक्षणं तत् कृतिसाध्यतया नेश्र्वरेणेष्यते ततो विषभक्षणस्य ईश्र्वरेच्छाविषयत्वेऽपि न तेन व्यभिचार: । यद्वा रत्कामकृतिसाध्यत्वेन यो व्यापार आप्तेनेष्यते स तस्येष्टसाधनं विषभक्षणञ्च तृप्तिकामकृतिसाध्यत्वेन नेश्र्वरेच्छाविषय: मानाभावात् । अतएव न कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षणं तृप्तिकामनया भक्षणप्रवृत्तस्य कृतिसाध्यत्वेनाप्तेच्छाविषयो नेति तस्येश्र्वरेच्छाविषयत्वेऽपि विशिष्टनिषेध उपपद्यते अभिप्रायविधिपक्षे बलवदनिष्टाननुबन्धित्वमानुमानिकं इष्टसाधनताविधिपक्षे तु तदपि शक्यमिति गौरवमिति ।।

# अपूर्ववादपूर्वपक्ष:

अथ स्वर्गकामो यजेतेत्यादाविष्टसाधनत्वं कार्यत्वं वा यद्विधि: स समभिव्याहृतक्रियान्वयी तदन्यान्वयी वा अत्र गुरव: नाहत्य क्रियाकार्यतया लिङ्गा बोधयितुं शक्यते स्वर्गकामनियोज्यान्वययोग्यताज्ञानविरहात् , कामनाविशिष्टस्य हि ममेदं कार्यमिति बोद्धृत्वं नियोज्यत्वं तत् कामनायास्तद्बोधोपयोगे सति भवति स च कामनानन्तरं काम्यसाधनताबोधनात् कार्यता बोधे सति स्यात् एवञ्च स्वर्गसाधनताबोधे सति स्वर्गकामनियोज्यान्वययोग्यता । न च कालान्तरभाविस्वर्गे क्रिया साक्षात् परम्परया वा साधनमिति शब्दो बोधयितुमर्हति आशुविनाशित्वात् परम्पराघटकानुपस्थितेश्र्च तृतीयप्रकाराभावाच्च । अन्यथा तमादाय साधनत्वसम्भवात् कल्प्यमप्यपूर्वं न स्यात् इष्टसाधनताविधिपक्षे स्फुटैवानुपपत्ति:

। कार्यताविधिपक्षे अन्वयप्रकारतया साधनत्वं शाब्दमिति फलतो न कश्र्चिद्विशेष: । अत: क्रियातोऽन्यत् स्वर्गसाधनतार्हं क्रियाकार्यतानिर्वाहकं लिङ्गाद्यर्थ: । ननु स्वजातीयेऽन्वयदर्शनं योग्यता दृष्टञ्च घृतपानस्याशुविनाशिन: कालान्तरे पुष्टिहेतुत्वमिति चेत् न यथाकथञ्चित् साजात्यस्यायोग्येऽपि सत्त्वेन योग्यतया अव्यावर्तकत्वापत्ते: पदार्थतावच्छेदकेन साजात्यस्याद्यजात: पय: पिबतीत्यादौ प्रकृते चासम्भवात् तस्मादन्वयप्रयोजकरूपवत्त्वं साजात्यम् ।अतएव द्रवद्रव्यत्वं सेककरणत्वे प्रयोजकं इत्ययोग्योवह्नि: तदिहाशुविनाशिन: कालान्तरभाविफलजनकत्वे फलसमयपर्यन्तस्थायिव्यापारजनकत्वं प्रयोजकमतोऽपूर्वं विना साजात्यमेव न गृह्नते घृतपानस्य तु वैद्यकोपस्थितधातुसाम्यमादाय पुष्टिसाधनत्वयोग्यताज्ञानं विज्ञस्य । अथ बाधकप्रमाणाभावो योग्यता । न च साधनत्वमात्रे बाधकं साक्षात्द्बोधेऽपि परम्परासाधनत्वमादाय तद्विश्रान्तिसम्भवात् । न च योग्यानुपलब्धा द्वारस्य बाधात् परम्परासाधनत्वमपि बाधितं संस्कारस्येव तस्य सम्भवात् अन्यथा वाच्येऽप्यपूर्वे क्रिया कामिकार्या न स्यात् काम्यासाधत्वात् । न हि यदेवायोग्यं तत्पश्र्चात् योग्यं अयोग्यत्वे च निष्फल: प्रयास: । न च कामिकार्यमपूर्वं तदर्थिकार्या च क्रियेति वाच्यम् । यागे रागादित्यनेन विरोधात् । तथापि द्वारानुपस्थित्या परम्परासाधनमिति ज्ञानं न भवेदिति चेत् सत्यं किन्तु स्वर्गसाधनं याग इति ज्ञानं साक्षात्परम्परोदासीनं वस्तुगत्या परम्परासाधनत्वविषयकमुत्पद्यमानं नायोग्यतया परिभवितुं शक्यम् । यदि च साक्षात्परम्पराविशेषद्वयव्यतिरिक्तं सामान्यं नास्त्येव तदा अननुगम: किं वा विशेषयसि साक्षात्परम्परया वेति । न च यावद्विशेषबाधे तद्बि#ाधितं परम्परासाधनत्वेऽबाधादिति । मैवं। योग्यता हि स्वबाधकप्रमाविरहो वा सकलबाधकप्रमाविरहो वा आद्ये वह्निना सिञ्चतीत्यादौ स्वबाधकप्रमा-तद्विरहौ समयभेदेन स्त इति तदेव योग्यमयोग्यञ्चेति प्राप्तं द्वितीये तु योग्यानुपलब्धा तन्निश्र्चयोऽशक्य: परप्रमाया अयोग्यत्वात् । न च वाच्यं सकलबाधकप्रमाविरह: स्वरूपसन्नेव प्रयोजक इति अयोग्ये योग्यताम्रमादन्वय बोधाभावप्रसङ्गात् अन्यस्य तत्र बाधकप्रमासत्त्वात् । अन्वयप्रयोजकरूपवत्त्वेन बाधकप्रमाविरहो निश्र्चीयते इति चेत् तर्हि प्राथमिकत्वात् सैव योग्यता । न च सा प्रकृते सम्भवतीत्युक्तं किञ्चैकविशेषबाधे शाब्दसामान्यज्ञानं तदितरविशेषप्रकारतानियतं छिद्रबाधे छिद्रेतरघटज्ञानवत् । न च द्वारानुपस्थित्या प्रकृते तथा घटते । एतेन यदुक्तं प्रशस्तरूपवान् चैत्र इत्यत्र गौर-श्यामविशेषानवगमेऽपि रूपमात्रमवगम्यते तद्वत् विशेषानवगमेऽपि साधनत्वमात्रमिति तत्प्रत्युक्तं तत्रैकविशेषबाधाभावेनौदासीन्यसम्भवात् ।

एतेन स्वर्गकामान्वयबलात् क्रियाया: फलसाधनत्वं तद्बलाच्च पटो: संस्कारस्येव स्थायित्वं कल्प्यतां किमपूर्वेण सङ्कल्पविशेषस्य यागस्याग्रे प्रत्यक्षानुपलब्धि रात्मविशेषगुणानां प्रथमक्षण एव स्वविषयकप्रत्यक्षजननस्वभावात् अस्तु न चैवं क्रियान्तरमपि तथा प्रमाणाभावात् एवं लोकप्रसिद्धक्रियाकार्यत्वव्युत्पत्तिरपि भग्ना न भवतीति परास्तम् । स्वर्गसाधनतायोग्यतया स्वर्गकामान्वय: तदन्वये च स्थायित्वं इत्यन्योन्याश्रयात् लाके धर्मिग्राहकमानेन क्रियाया: क्षणिकत्वनिश्र्चयाच्च ।

ननु देवपूजार्थो यजि: पूजा चाराधना गौरवितप्रीतिहेतु: क्रिया अतो देवताप्रीतिद्वारा यागस्य स्वर्गसाधनत्वं प्रीते: क्षणिकत्वेऽपि प्रीत्यनुभवजनितसंस्कारद्वारा तत्सम्भवात् । अतएवाग्नेयादौ प्रीतिभागितया अग्नगदेरुद्धेश्यत्वमिति चेत् न यज् देवपूजायां इति हि शाब्दिकस्मृति: स्मृतित्वादेव न स्वत: प्रमाणम् । न च यागस्य देवताप्रीतिहेतुत्वे स्वर्गस्य देवताप्रीतिसाध्यत्वे वा मानान्तरमस्ति । वस्तुतस्तु चेतने देवे मानमेव नास्ति यत्र च विष्णुप्रीतिकामादिवादोऽस्ति तत्र विष्णुरेव प्रीति: न तु विष्णो: षष्ठ¬र्थलक्षणादोषात् विष्णुशब्दस्य प्रीतिविशेषवाचकत्वं वेद एव कल्प्यते । न च देवतापूजार्थयज्यन्वयबलात्तथा अन्योन्याश्रयात् । नन्वेवं आग्नेयांदीनां षणां क्षणिकत्वात् योग्यतानवगतौ परमापूर्वकारणत्वानवगमे कथमपूर्वकल्पनेति चेत् न काम्ये अपूर्ववाच्यत्वस्थितौ आग्नेयादौ तद्वारा साधनत्वस्य योग्यतासम्भवात् न तु प्रथमम् ।

ननु यो ब्राह्मणायावगुरेत्तं शतेन यातयेदित्यत्र ब्राह्मणबधोद्यमस्य शतयातनाहेतुत्वावगमे यथा दुरितापूर्वं कल्प्यते तथेहापीति चेत् न अवगुरेत् यातयेत् इत्यत्र हेतु-हेतुमतोर्लिङितिव्यनुशासनात् लिङ्गा अवगोरण शतयातनयोर्नियतं पौर्वापर्यं बोध्यते प्रत्यक्षेणानुभव-स्मरणयोरिव तच्च साधनत्वे साधनसाधनत्वे वा उभयमपि मध्यवर्तिघटितमिति दूरितकल्पनं संस्कारवत् इह तु विध्यनुशिष्टा लिङ्ग् कार्यतामाह । किञ्च कामी

काम्यादन्यत् काम्याव्यवहितसाधनतया ज्ञातमेव कर्तव्यतयाऽवैतीति नियमात् न क्रियायां कामिनोन्वयो योग्यः । न च तृप्तिकामस्य पाके प्रवृत्तेर्व्यभिचारः ओदनकामस्य तत्र प्रवृत्तेः तृप्तिकामना त #ुतत्कामनोपयोगिनो न तु साक्षात् अन्यथा साधनसाधने प्रवृत्तिर्न स्यात् । काम्यसाधनत्वं प्रवर्तकं

लाघवादिति चेत् न भोजनकामस्य सिद्धौदनस्य पाके प्रवृत्तिप्रसङ्गात् तस्यौदनद्वारा भोजनसाधनत्वाविशेषात् विशेषणे तु यत्राव्यवहितसाधनं पाकः तत् न काम्यं यच्च काम्यं तत्र नाव्यवहितसाधनं पाकइति न प्रवृत्तिः । ननु पाकस्य सिद्धौदनद्वारा भोजनसाधनत्वं न सम्भवति द्वारस्यासाध्यत्वात् ओदनान्तरद्वारा च तथा प्रतिसन्धाने अव्यवहितविशेषणेऽपि कुतो न पाके प्रवर्तते ओदनान्तरे द्वारे साक्षात्साधनत्वादिति चेत् न पाकस्य भोजनसाधनत्वे विशेषस्याप्रयोजकतया ओदनमात्रस्य द्वारत्वात् तस्य च साध्यत्वाविवादात् । ओदनविशेषे च सिद्धे ओदनकामनाविरहात् न तुल्यत्वम् । नन्वोदने सिद्धत्वात् यथा न कामना तत एव द्वारतापि न अथौदनान्तरस्यासिद्धत्वमादाय द्वारता तर्हि कामनापि स्यात् तस्यासिद्धत्वमादाय द्वारता तर्हि कामनापि स्यात् तस्यासिद्धत्वादिति चेत् न पाकस्यैकविशेषद्वारता बाधो न विशेषान्तरद्वारताविरोधी सकलविशेषस्यैकत्र द्वारत्वासम्भवात् एकविशेषसिद्धौ तु तन्मात्रकामना विच्छिद्यते न हि सकलविशेषसिद्धत्वेन सामान्यकामनाविच्छेदः सकलविशेषसिद्धेरसम्भवेन तदनुच्छेदप्रसङ्गात् । अथ वा काम्यादन्यत् साक्षादसाधनत्वेन ज्ञायमानं यत्कर्तव्यतया कामो बुध्यते तत्काम्याव्यवहितसाधनमन्तरा कृत्वैव । यद्वा काम्यादन्यत् कामो प्रथमं काम्याव्यवहितसाधनं कर्तव्यतयाऽवैति पश्चात् तद्वारा अव्यवहितसाधनमिति प्रथमं यागे कामिकार्यताबोधोऽयोग्यतापराहत एव ।

उत्तानास्तु विवादविषयोलिङ्ग् समभिव्याहृमतक्रियान्वितकार्यताबोधिका प्रमाणलिङ्गत्वात् लौकिकलिङ्गवत् लिङ्गपस्थाप्यं कार्यत्वं समभिव्याहृमतक्रियान्वितं लिङुपस्थाप्यकार्यत्ववत्वात् पचेतेतिकार्यत्ववत् यागो वा कार्यत्वान्वितः क्रियाकार्यत्वावगमेनापूर्वं कल्प्यमिति तत्र प्रथमे यागान्वितकार्यत्वबोधिकत्वं लिङ्गो बोध्यते न तु क्रियते । न च योग्यताज्ञानं विना तत्सम्भवतीत्युक्तमेव । न हि योग्यतादिकं विनैव तदनुमानप्रामाण्यप्रयोजनमात्रादन्वितमभिधीयते शब्देन नान्त्यौ कुर्यादित्यत्र व्यभिचारात् वेदास्यानुवादकतापाताच्च ।

नन्वपूर्वे व्युत्पत्तिविरहः तथा हि प्रसिद्धार्थस्वर्गकामपदसमभिव्याहारान्यथानुपपत्त्या उपस्थिते शक्तिग्रहीतव्या । न च शाब्दानुभवात् पूर्वं अपूर्वमुपस्थितं मानाभावात् अपूर्वत्वव्याघातात् अवाच्यत्वापाताच्च । न च लिङ्गादिना तदुपस्थितिः व्युत्पत्त्यनन्तरं तत्प्रवृत्तावन्योन्याश्रयात् । न च कार्यत्वेनोपलक्षिते तत्र शक्तिग्रहः उपलक्षणं हि स्मरणमनुमानं वा अगृहीते सम्बन्धाग्रहादशक्यमिति । मैवं । कार्ये धर्मिणि कार्यत्वेन शक्तिग्रहात् कार्यत्वविशिष्टञ्चोपस्थितमेव ततोऽन्विताभिधानदशायां यागविषयकं कार्यमित्यनुभवः स्वर्गकामान्वयायोग्यतया घटादिकं तिरस्कृत्य क्रियांभिन्ने योग्यतावशाद्यागविषयकापूर्वे पर्यवस्यति न त्वपूर्वत्वेन शक्तिग्रहः । न चापूर्वं कार्यमित्यनुभवः भवति च सामान्यतः सम्बन्धबुद्धिः सहकारिवशात् विशेषबुद्ध्यापयः यथा तवैव कर्तृविशेषसिद्धिः । ननु कार्यत्वेनापि किं घटादौ शक्तिग्रहः उतापूर्वे उभयत्र वा नाद्यः अन्यप्रतिपत्तावन्यशक्तिग्रहानुपयोगात् । नान्त्यौ प्रागनुपस्थितेरिति चेत् न येन हि रूपेण शब्देनानुभवो जन्यते तेन रूपेण शक्तिग्रहः पदार्थस्मरणञ्च शाब्दानुभवहेतुः न हि प्रमेयत्वेन शक्तिग्रहः पदार्थस्मरणञ्च घटत्वेन शाब्दानुभवहेतुः । एवञ्च घटादावेव कार्ये शक्ता लिङ्गिति शक्तिग्रहस्ततः कार्यमिति स्मरणं ततो योग्यतादिवशात् प्रचुरद्रव्य-गुण-कर्माणि कार्याणि विहाय यागविषयकं कार्यमित्युनुभवो भवन्नपूर्वमालम्बते योग्यत्वाच्च तस्य स्थायित्वलाभः । अतएव वाक्यार्थानुभवमात्रविषयत्वात्तदपूर्वम् । न च स्मृतानामाकाङ्कादिवशादन्वयबोधः पदेन क्रियते न चापूर्वं स्मृति#ेगोचर इति वाच्यम् । शक्तिग्रह-पदार्थस्मृतिशाब्दानुभवानां समानप्रकारकतामात्रेण हेतु-हेतुमद्भावावधारणात् लाघवादावश्यकत्वाच्च न तु क्वचित् सहचारमात्रेण अन्वयप्रतियोगिन एवोपस्थितिस्तथा गौरवात् गोपदादपूर्वगवाननुभवप्रसङ्गाच्च । विशिष्ट-वैशिष्ट¬बोधे सर्वत्र तथैव अन्यथा पर्वतीयवह्निर्व्यापकतया नावगत इति कथं तदन्वयोऽनुमितौ । ननु सामान्यलक्षणा प्रत्यासत्त्या सर्वा एव व्यक्तयो व्याप्तिग्रहे शक्तिग्रहे च विषयीभवन्ति कथमन्यथा पर्वतीयधूमव्याप्त्यग्रहे तस्मादनुमितिरिति चेत् न येन रूपेण व्याप्तिग्रहस्तेन रूपेण व्याप्यत्वेन वा पक्षधर्मताग्रहोऽनुमितो#ै कारणमस्तु किं तथा । अपि च सा यद्यस्ति ममापि नास्ति चेतावापि । किञ्च तव दर्शने सास्तीति सुतरामपूर्ववाच्यता कार्यत्वेन हि रूपेणापूर्वस्यापि शक्तिग्रहविषयत्वं पदार्थस्मृतिविषयत्वञ्च । न चैवमपूर्वत्वक्षतिः यागविषयत्वादेर्विशेषस्य कार्ये लिङ्गं विनानुपस्थितेः यथा पर्वतीयत्वभानं वह्नौ नानुमितिं विना । ननु कार्ये यदि क्रियासाधारणेन लिङ्गशक्तिः क्रिया चायोग्येति योग्यपूर्वलाभः तदा नित्यनिषेधापूर्वयोरलाभः न हि तत्रायोग्यतया क्रिया त्यक्तुं शक्यते फलाश्रवणात् कल्पनायाञ्च बीजाभावात् । न च एकत्र निर्णीतः शास्त्रर्थोऽन्यत्र तथैवेति न्यायात् तत्राप्यपूर्वमेव लिङ्गर्थ इति त्यक्तुं न ह्यपूर्वत्वेन शक्तिग्रहः किन्तु कार्यत्वविशिष्टे धर्मिणि क्रिया च तथा भवत्येव । न च कार्येण समं क्रियाया अन्वयानुपपत्त्या अपूर्वे पर्यवसानं

अभेदस्याप्यन्वयादिति । मैवं । न हि लोके पचेतेत्यादौ कार्ये धर्मिणि शक्तिः कल्पिता किन्त्वनन्यलभ्ये कृतिरूपे कार्यत्वमात्रे धर्मिणः पाकादेर्धातोरेवोपस्थितिसम्भवात् क्रियाकार्यत्वस्यान्विताभिधानलभ्यत्वातथाच धर्मिणि वेदे शक्तिः कल्पनीया सा च क्रियानिरासेनैव । न हि क्रियायाः कार्यत्वान्वययोग्यत्वे धर्मिणि शक्तिः कल्पयितुं शक्यते तस्मादयोग्यतया क्रियानिरासानन्तरं तदतिरिक्त एव शक्तिः कल्पनीया । न च क्रियातिरिक्तकार्यात् कार्यमात्रं लघुः ततः क्रियापि शक्यैवेति वाच्यम् । यतो न ब्रूमः क्रियातिरिक्तकार्यत्वेन शक्तिः किन्त्वयोग्यतया क्रियायां निरस्तायां धर्मिणि शक्तिकल्पनसमये यत् क्रियातिरिक्तं तत्र शक्तिः न तु शक्तिग्रहे क्रियाप्रवेशः न हि यत्प्रयुक्तानुपपत्त्या यत्कल्पनं तदेव तस्य वि#ेषयः एवञ्च कार्यत्वेनापि तदतिरिक्तकार्ये एव शक्तिकल्पनान्नित्य निषेधयोरपि तदेवोपासनाद्यन्वययोग्यं लिङ्गाभिधीयते न तु कार्यत्वमात्रं धर्मिणि बाधकाभावात् लक्षणाप्रसङ्गाच्च । घटादिस्तु लिङ्गशक्तिग्रहे न तिरस्क्रियते न पुरस्क्रियते उययथापि गौरवात् । अन्विताभिधानदशायान्वयोग्यतया तस्याप्रवेशः विधिप्रत्ययस्य च तत्राप्रयोगः केवलस्य तस्यासाधुत्वात् । धातुसमभिव्याहारस्थले च तदर्थेनान्वयबोधजननियमेन घटाद्यप्रतिपादकत्वात् । अतएवाप्रयोगादेवाप्रयोगोऽपूर्वत्वं वा प्रयोगोपाधिरिति

वदन्ति । अथाप्रतिपाद्यधटादिवृत्तितया न कार्यत्वं प्रवृत्तिनिमित्तं प्रतिपाद्यघटादिवृत्तितया न कार्यत्वं प्रवृत्तिनिमित्तं प्रतिपाद्यमात्रवृत्तेरेव तथात्वात् अन्यथा प्रमेयत्वमेव तथास्त्विति चेत् न यत्प्रकारिका हि प्रतिपत्तिः पदजन्या तदेव तत्र प्रवृत्तिनिमित्तं फलकल्प्यत्वात् शक्तेः न तु प्रतिपाद्यमात्रवृत्ति सास्नादौ व्यभिचारात् । न च प्रमेयत्वं तथा तद्बोधस्याप्रवर्तकत्वात् । अतएव लाके लिङ्ग् लाक्षणिको क्रियाभिन्ने धर्मिणि वेदे शक्तिकल्पनात् । न च लौकिकानामपूर्वे तात्पर्यं सम्भवति पूर्वं प्रमाणान्तरेणाप्रतीते क्रियासाधारणशक्तावपि लोके लक्षणैव पचेतेत्यत्र हि पाककार्यतावगम्यते तत्र कार्यत्वे लिङ्गस्तात्पर्यं लाघवात् । न धर्मिणि क्रियाया धातुलभ्यत्वात् । तदाहुः तात्पर्याद्धि वृत्तिर्न तु वृत्तेस्तात्पर्यमिति तृतीयायाः करणत्वैकत्वात् कार्यं कार्यत्वञ्च न स्वतन्त्रं शक्यं किन्तु विशिष्टं विशिष्टाच्च विशेषणमन्यदेवेति कार्यत्वे लक्षणा । न च कार्यत्वविशिष्टधर्म्युपस्थितावपि धर्म्यंशमपहाय क्रियायां कार्यत्वान्वयोऽस्तु किं लक्षणयेति वाच्यम् । न हीतरधर्मिगतत्वेनोपस्थितस्य धर्म्यन्तराकाङ्कास्ति अतः स्वतन्त्रकार्यत्वोपस्थितये धर्म्यन्तराकाङ्क्षास्ति अतः स्वतन्त्रकार्यत्वोपस्थितये लक्षणा यथा पुरोडाशकपालेन तुषानुपपचतीत्यत्र पुरोडाशर्थितया तदन्वितत्वेनोपस्थितस्य कपालस्य नोपवापाकाङ्क्षेति स्वतन्त्रकपालोपस्थितयेऽधिष्ठानलक्षणा ।

न च व्युत्पत्तिविरोधः न हि लोके क्रियाकार्यत्वे शक्तिरवधारिता येन विरोधो भवेत् किन्तु कार्यत्वमात्रे क्रियाया धातुलभ्यत्वात् । न च धर्म्यन्तरे शक्तावपि तद्भङ्गः तस्मात् प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानां गृहीतं प्रत्ययार्थश्चापूर्वमपीति न विरोधः । अस्तु वा लोके लिङ्गः क्रियाकार्यत्वे शक्तिः तथापि तद्भङ्गं विनैव नानार्थन्यायेन वेदे धर्म्यन्तरे शक्तिस्तां विना स्वर्गकामान्वयासम्भवात् ।

अन्ये तु पचेतेत्यादौ धातुनैव पाकः कार्योऽभिधीयते लिङ्ग् तत्र तात्पर्यग्राहिका न तु शक्ता नियमतस्तादृश्येव तत्प्रयोगात् सामान्यशब्दस्य विशेषपरत्वञ्च न वृत्त्यन्तरनिर्वाह्यं अतएव वर्तमानत्वादौ न लङ्गादिशक्तिरिति लोके शक्यग्रहात् न व्युत्पत्तिविरोध इति तदसत् लिङः कार्यत्वेऽशक्तौ पचिपदात् कार्यत्वज्ञानानुपपत्तेः युगपद्वृत्तिद्वयविरोधात् । न चाजहत्स्वार्था उभयसाधारणस्यानुपस्थितेरिति दिक् ।

यद्वा ज्ञाने पदानां शक्तिः शक्यत्वात् एवञ्च लिङ्गपदं एकत्रोच्चारणे योग्यतादिवशात् यागविषयकं स्तायिस्वर्गजनकं कार्यमित्येकं ज्ञानमनुभवरूपं प्रचुरद्रव्य-गुण-कर्मविलक्षणविषयं क्रियते । न चैवं नानार्थवदेकैकज्ञाने शक्तिग्रहादेकैकविषयोऽनुभवो भवेत् न समुदितविषय इति वाच्यम् । शक्तिग्रहकाले एकत्रोच्चारण इति विशेषणमहिम्ना तत्सम्भवात् नानार्थे तु प्रमाणाभावेन गौरवेन च शक्तिग्रहे तस्याप्रवेशनात् । तथाप्यमीषां समूहालम्बनं स्यान्न तु परस्परं वैशिष्ट¬ज्ञानमिति चेत् न साकाङ्क्षधर्म-धर्मिगोचरैकज्ञानस्यैव विशिष्टज्ञानत्वात् चन च समूहालम्बनसम्भेदः । तस्य निराकाङ्क्षविषयत्वात् । अस्तु वोपस्थितेष्ठगृहीतासंसर्गेषु स्थायित्वस्वर्गजनकत्व-कार्यत्वेषु शक्तिः अगृहीतासंसर्गकस्यापि विशिष्टज्ञानसमानशीलत्वात् अत उक्तन्यायेन तावद्विषयकमेकं ज्ञानं लिङ्गपदेन जन्यते । एवमेवालौकिकार्थेषु स्वर्गादिपदेषु शक्तिग्रहः । ननु भवतूक्तप्रकारेण शक्तिग्रहस्तथापि लिङ्पदात् यागविषयककार्यानुभवे सत्यपूर्वलाभात् स्वर्गकामान्वयः सम्भवतीत्युपपादकप्रतिसन्धाने प्रसिद्धार्थस्वर्गकामपदसमभिव्याहारान्यथानुपपत्त्या लिङ्गः कार्ये शक्तिकल्पनं । न हि प्रथममुपपादकप्रतिसन्धानं विनार्थापत्तिः सम्भवति । न च शक्तिकल्पनात् पूर्वं उपपादकशरीरनिविष्टमपूर्वं ज्ञातमिति चेत् तत् किं य एव विशेष उपपादकः पक्षधर्मताबलात् सिद्ध्यति तत्प्रतिसन्धानमर्थापत्तौ कारणं तथात्वे पूर्वं गृहीतमात्रस्य कल्प्यते

कल्पनोच्छेदापत्तिः । तस्मात् यथा सामान्यतोभोजनस्य पीनत्वसम्बन्धावगमात् उपपादकतर्के सति कल्पनातो विशेषावगमः यथा वा सामान्यशक्तव्यक्तिवाचकपदेन समभिव्याहारवशाद्विशेषाभिधानमेवमत्रापि कार्यमात्रवाचकत्वे कार्यविशेषलाभः सम्भवतीति तर्कितोपपादकप्रतिसन्धानाद् भवत्यर्थापत्त्या शक्तिकल्पनं यागविषयकञ्च कार्यं न घटादि तस्य सविषयकत्वाभावात् विषयत्वञ्च ज्ञानघटयोरिव स्वभावसम्बन्धो वा तन्निरूपणाधीननिरूपणत्वं वा तत्सानसंवितसंवेद्यत्वं वा व्यावृत्तसाधनत्वं वेति । अस्ति हि याग-दान-होमजन्यापूर्वाणां तुल्यरूपसाधनान्तरव्यवच्छेदेन प्रत्येकमात्रजन्यत्वम् । तदुक्तं विशब्दो हि विशेषार्थः सिनोतिर्बन्ध उच्यते । विशेषेण सिनोतीति विषयोऽतो नियामकः इति । ननु येन रूपेण शक्तिग्रहः तेन रूपेण कार्यत्वशक्तालिङ्ग् पदाल्लक्षणया कार्योपस्थितौ योग्यतादिवशादपूर्वलाभोऽस्तु कार्यस्मरणं हि अन्विताभिधानोपयोगि न त्वपूर्वस्मरणं तच्च पदेन पदार्थेन वेति न कश्चिद्विशेषः कार्यञ्च शक्यकार्यत्वसम्बन्धितयावगतमेवेति चेत् न लिङ्गो लाक्षणिकत्वेनापूर्वाननुभावकत्वात् । न चेतरान्वितस्वार्थशक्तस्य यज्यादिपदस्येतरदपूर्वमादायानुभावकत्वमिति वाच्यम् । इतरोपलक्षितस्वार्थान्वयमात्रे हि पदानां शक्तिर्न त्वितरत्र गौरवात् पदान्तरलभ्यत्वाच्च । लक्षणायाञ्च तीरोपलक्षितान्वयशालिस्वार्थानुभावकत्वीमितरपदस्य तीरस्य तु संस्कारादुपस्थितिरसन्निहितेनान्विताभिधानाभावात् । न चापूर्वं संस्कारविषयः । किञ्च यजिपदेन स्वर्गकामकार्यविषयो याग इत्युनुभवोभवेत् लक्षणायामितरपदस्य लक्षणीयविशेषणस्वार्थविशेष्यकानुभवजनकत्वात् । न चैतादृशो बोध आकाङ्क्षितः । न च यागाविशेषितकार्यमात्रेण स्वर्गकामान्वयः प्रतीयते किन्तु यागवि#ेषयककार्यविशेषे तथाच तथाविधबोधार्थं लिङ्गः कार्ये शक्तिरेवेति ।

# अपूर्ववादसिद्धान्तः

अत्रोच्यते । अन्वयप्रयोजकरूपवत्त्वं न योग्यता अनाप्तोक्ते पयसा सिञ्चतीत्यत्र सत्यप्यन्वयप्रयोजकद्रवद्रव्यत्वे बाधकप्रमायामन्वयाबोधात् । अथ योग्यत्वेऽपि स्वबाधकप्रमायामन्वयाबोधात् । अथ योग्यत्वेऽपि स्वबाधकप्रमाविरहः कारणं तर्हि सोऽप्यवश्यापेक्षणीयइति लाघवात् सैव योग्यता एवञ्च तदेव योग्यमयोग्यञ्च स्यादिति चेत् सत्यं यथा दशाविशेषे तदेव साकाङ्क्षमनाकाङ्क्षमासन्नञ्च तथा स्वबाधकप्रमा-तद्विरहदशायां तदेवान्वयबोधे योग्यमयोग्यञ्चाभिधीयते स्वबाधकप्रमायां तद्विरहे वा योग्यायोग्यताव्यवहारदर्शनात् स्वबाधकप्रमाविरहदशायां योग्यतादिसत्त्वेऽपि वह्निना सिञ्चतीत्यत्रान्वयबोधः अप्रमादोषवत्पुरुषणीतत्वात् । सामान्यभानस्य

किञ्चिद्विशेषभाननियतत्वात् विशेषाभाने कथं तद्भासत इति न वस्तुगत्या परम्परासाधनं विशेषो भासत एवय परम्परासाधनत्वन्तु प्रकारो न भासते तत्प्रकारभाने हि परम्पराघटकज्ञानस्य हेतुत्वात् यथा घटेन जलमाहरेत्यत्र योग्यतया छिद्रेतरघटे घटत्वेन भासते न तु छिद्रेतरत्वेन तथा सति लक्षणायां युगपद् वृत्तिद्वयविरोधेन घटानन्वयप्रसङ्गात् उभयसाधारणरूपेणानुपस्थितेश्च नाजहत्स्वार्था । अथ संस्कारात्तदुस्थितिः । न च सुब्विभक्तीनां प्रकृत्यर्थगतस्वार्थान्वयबोधकत्वव्युत्पत्तेस्तत्र विभक्त्यर्थो नाव्यीयेतेति वाच्यम् । प्रकृत्यर्थो हि प्रकृतिप्रतिपाद्याः लक्षणीयान्वयानुरोधात् । स च संस्कारसहकारात् प्रकृतेऽपि । न च तस्यानियतोद्बोधकान्न नियता तदुपस्थितिः । फलबलेन तथा कल्पनादिति चेत् न शब्दोपस्थापि तनैव शब्दस्यान्वयबोधकत्वात् । न चैवमाकाशपदाशक्यस्य संस्कारोपस्थितस्य शब्दाश्रयत्वस्य कथं शाब्दानुभवविषयत्वमिति वाच्यम्। नियमतो यद्धर्मवत्त्वेनोपस्थिते यत्र शक्तिग्रहः तत्स्मरणजनकसंस्कारस्य तद्धर्मविषयतानियमेन तदुद्बोधकादेव तदंशेऽपि उद्बोधनियमेनाकाशपदादशक्यस्यापि तस्य भानात् । अस्तु वा तदपि शक्यं यदि नियमत उपस्थितिः सहप्रयोगस्य वाच्यादिपरत्वेनाप्युपपत्तेः । वस्तुतस्तु नियतोपस्थितिरेव नास्ति । अस्तु वा पदादपि निर्विकल्पकं तद्धॄन्वयबोधदशायामितरान्वयानुपपत्त्यभावादग्रेऽपि कल्पना न स्यादिति चेत् तर्हि तवापि कार्यताबोधानन्तरं औपादानिकमाधनताबोधो न स्यात् औपादानिकमाधनताबोधो न स्यात् औपादानिकबोधेऽनुपपत्तिबोधस्य हेतुत्वात् क्लपनामात्रोच्छेदश्चैवं स्यात् प्रतीतानुपपत्तिमूलत्वात् कल्पनायाः । वस्तुतस्तु बाधकप्रमाविरहस्य योग्यतात्वे संशयपसाधारणं ज्ञानमात्रमेव तस्याः प्रयोजकं तेन यत्र बाधकप्रमानिश्चयस्तत्रैवान्वयबोधाभावोऽन्यत्र तु तद्धीमात्राच्छब्दबोध इति यागेऽपि योग्यतासंशयेनान्वयबोधाप्रतिबन्धः बाधसंशयस्याप्रतिबन्धकत्वात् अन्यथा अनुमानाद्युच्छेदप्रसङ्गात् । अपूर्ववाच्यत्वेऽप्यपूर्वे स्वर्गसाधनतासंशयाद्योग्यतायाः संशय एव अपूर्वस्य प्रथमं स्वर्गसाधनत्वानिश्चयादुपादानस्यान्विताभिधानोत्तरकालीनत्वात् साधक-बाधकप्रमाणाभावेन द्वारसम्भवनया साधनत्वसम्भावनातः स्वर्गकामान्वय इति तुल्यम् । अपि च यथा न क्रिया स्थिरेत्ययोग्या तथा कार्यमपूर्वमपि विशिष्टं न स्थिरं कृतेर्विनष्टत्वात् । न चाधिषेठाने अपूर्वमात्रे साधनत्वं तस्य पदार्यैकदेशत्वेनान्वयाप्रतियोगित्वात् ।

अन्ये त्वन्वयविरोधिरूपविरहो योग्यता अतएव वह्निना सिञ्चतीत्यत्र तद् भ्रमे भवत्यन्वयभ्रमः । यागे चान्वयविरोधिरूपविरहो योग्यानुपलब्ध्या सुगम एव । न च यागे आशुविनाशित्वं कालान्तरभाविफलजनकत्वविरोधीति वाच्यम् । अनुभवे क्वाथपाने चाशुविनशिनि कालान्तरभाविफलजनकत्वाद् यागेऽप्यन्ततस्तत्सत्त्वात् अन्यथापूर्ववैफल्यात् । अस्मादन्वयप्रयोजकरूपवत्त्वं लघ्विति चेत् न तत्सत्त्वेप्यनाप्तोक्ते व्यभिचारादन्वयविरोधित्वेन यत्किञ्चित् प्रतिसन्धानं तत्रास्त्येव अन्ततो बाधकप्रमाविषयत्वस्यैव विरोधिनोज्ञानादिति ।

काम्यसाधनत्वज्ञानमेव प्रवर्तकं लाघवात् । सिद्धौदनस्तृप्तिकामो लघूपाये भोजने प्रवर्तते न तु पाके गुररूपायत्वात् जलाद्यर्थी च सन्निहिते । अतएव ज्योतिष्टोमादौ श्रुतस्वर्गफलकत्वेऽपि गुरूपायत्वेनाननुष्ठानलक्षणाप्रमाण्यापत्त्या फलभूमा कल्प्यते इष्टोत्पत्त्यनान्तरीयकश्रमजनकत्वं वा प्रतिबन्धकं । अपि च काम्यव्यवहितसाधनतया ज्ञातमेव यदि कामी कर्तव्यतयाऽवैतीति नियमः तदा पूर्वमपि कार्यतया नावगम्येत अन्विताभिधानात् पूर्वं काम्यसाधनताबोधकाभावादुपदानसस्यान्विताभिधानोत्तरकालीनत्वात् । अतएव काम्यादन्यदित्यादि प्रकारद्वयं निरस्तं कार्यताबुद्धौ प्रवृत्तौ वा काम्यसाधनत्वस्यैव हेतुत्वात् । न च कार्ये घटादौ लिङशक्तिग्रहकाले स्वर्गकामान्वयायोग्यत्वात् क्रियानिरासस्तथा यागान्वयानुपपत्त्या घटादिनिरासोऽपि स्यात् । न हि यागविषयको घटादिः सम्भवति अन्यथा अन्विताभिधानदशायामपि तन्निरसो न स्यात् । स्यादेतत् स्वर्गकामान्वयानुपपत्त्या तदन्वययोग्ये लिङशक्तिग्रहः स्थायिकार्यञ्च तथा अतः शक्तिग्रहकाले क्रियानिरासो युज्यते न घटादेः । यजिपदमन्तर्भाव्य स्वर्गकामपद-लिङपदाभ्यां अन्विताभिधानदशायां घटादिनिरासो यागान्वययोग्यत्वादिति तत् किं शक्तिग्रहकाले यागान्वयनुपपत्तिर्हस्तपिहिता येन घटादिनिरासिका सा न प्रतिसन्धीयेत । प्रत्युत प्रत्ययस्यान्तरङ्गप्रकृत्यर्थान्वयं बोधयत एवेतरान्वयबोधकत्वमिति तदन्वयानुपपत्तिप्रतिसन्धीयते । प्रत्युत प्रत्ययस्यान्तरङ्गप्रकृत्यर्थान्वयं बोधयत एवेतरान्वयबोधकत्वमिति तदन्वयानुपपत्तिप्रतिसन्धानमेव प्राथमिकं पुरुषदोषादप्रतिसन्धाने शक्तिग्रहो भ्रम एव घटादेरशक्यत्वात् पुरुषविशेषं प्रति अपूर्ववाच्यतापत्तेश्च । घटादीनामनन्तत्वेन यदि तन्निरासो न शक्यः तदा अन्विताभिधानदशायामपि न स्यात् पाकादीनां क्रियात्वेनेव पृथिवीत्वादिना निराससम्भवाच्च । एवञ्च प्रचुरद्रव्य गुण-कर्मसु निरस्तेषु क्व कार्ये धर्मिणि शक्तिग्रहः । न च विशेषे निरस्तेऽपि कार्यसामान्यं न निरस्तमिति वाच्यम् । न हि विशेषाविषयं सामान्यज्ञानं सम्भवति । एतेनापूर्वसाधारणकार्यत्वेन घटादौ शक्तिग्रह इति परास्तम् । अगृहीतासंसर्गेषु स्थायित्वकार्यत्व-स्वर्गजनकत्वेषु तज्ज्ञनेषु वा शक्तिग्रह इत्यपि परास्तं स्थायिनां घटादीनां निरासात् धर्ममात्रे च शक्तिग्रहस्य प्रकृतेऽनुपयोगात् । किञ्च तेषु शक्तिग्रहः समुदितेषु प्रत्येकं वा नाद्यः प्रथमं समुदायस्यैकज्ञानाविषयत्वात् विषयत्वे वा पूर्वमेव विशिष्टस्य सत्त्वेऽपूर्वत्वव्याघातः एकज्ञानविषयसाकाङ्क्षधर्म-धर्मिणोरेव विशिष्टत्वात् । न द्वितीयः एवं हि लिङपदात् स्मरणत्रयं यजिपदाच्च यागस्मरण । न च चतुर्णां तेषां यौगपद्यमस्ति । न च प्रत्येकं शक्तिग्रहेऽपि समुदितविषयकमेकमेव स्मरणं लिङपदादिति युक्तं समुदायस्य पूर्वमननुभवात् । स्मरणञ्च यदि साकाङ्क्षधर्म-धर्मिविषयकमेकं तदा अपूर्वत्वक्षतिः एकज्ञानारूढयोः साकाङ्क्षधर्म-धर्मिणोरेव विशिष्टत्वात् तन्नियतत्वाद्वा । एतेन स्वर्गादिपदेषु अगृहीतासंसर्गधर्म-धर्मिषु शक्तिग्रह इति व्युदस्तम् । प्रत्येक-समुदायविषयकस्मरणविकल्पग्रासात् । अस्तु वा लिङ्गः कार्ये लक्षणा यथा हि मञ्चाः क्रोशन्ती#ित्यादौ पुरुषविशेषः प्रागननुभूतोऽप्यनुभूयते इतरपदाल्लाक्षणिकस्यानुभावकत्वात् तथाऽपूर्वमपि अस्तु च स्वर्गकामकार्यविषयो याग इति शाब्दानुभवानन्तरमर्थाद्यागवि#िषयकं कार्यमिति ज्ञानं अनुपपत्तिप्रभवं । अतएव शाब्दबोधानन्तरमौपादानिकबोधात्प्रधात्प्रवृत्तिः । किञ्चापूर्ववाच्यत्वेऽपि न कलञ्जं भक्षयेदित्यादितः कलञ्जभक्षणाभावविषयकमपूर्वमवगम्यापि न प्रवर्तेत तदभावे तथाहि भक्षणे रागादस्य कर्तव्यताबुद्धिर्जाता शब्दाच्च भक्षणाभावे निष्फलात् कार्यात् सफलं गरीय इति न्यायेन सुखहेतौ भक्षण एव प्रवर्तेत न तदभावे निषेधापूर्वमेव फलमिति चेत् न तस्य सुख-दुःखाभावान्यतया

फण्डत्वेनतदजनकतयाच गौण-मुख्यप्रयोजनत्वाभावात् । सुखवदपूर्वमपि प्रयोजनमिति चेत् न लोके तथानवगमात् । अलौकिकयो: स्वर्गपवर्गयो: लोकावगतप्रयोजनसुख दु:खाभावजातीयतया प्रयोजनत्वं वेदेऽपि काम्यस्थले काम्यसाधनस्यैवापूर्वस्य गौणप्रयोजनस्य लिङ्गाभिधानं काम्यसाधनताज्ञानं विना कामिकार्यत्वस्य बोधयितुमशक्यत्वात् न तु स्वत: प्रयोजनत्वेन तत्रासामाथ्र्यादनुपयोगाच्च प्रवृत्तेर्भोजनादाविवलोकक्लृप्तकाम्यसाधनताज्ञानात् कार्यताज्ञानाद्वा गौणप्रयोजनत्वेनैवोपपत्ते: । नापि

नित्य-निषेधयोरपूर्वं स्वत: प्रयोजनं लिङ्गाभिधीयते । काम्यस्थले हि धर्मिग्राहकलिङ्गादिना प्रवर्तककार्यत्वेनापूर्वमभिहितमतोनित्यादावपि कार्यत्वेनापूर्वबोधनं न तु स्वत: प्रयोजनत्वेन । ननु नित्ये लोक-वेदावगतगौण-मुख्यप्रयोजनाभावे सति लिङ्गेवापूर्वस्य स्वत: प्रयोजनत्वं बोधयति तेन विना प्रवृत्तिपरत्वानिर्वाहादिति चेत् न निरुपधीच्छाविषयत्वं हि स्वत: प्रयोजनत्वं अपूर्वस्य सिद्धं लिङ्गा बोधनीयम् । न च तादृशेच्छाविषयोऽपूर्वं क्वचिदपि सिद्धम् । न च लिङ्गेवापूर्वेच्छां जनयित्वा तां बोधयति तस्यास्तत्रासामथ्र्यादिच्छाया: सामग्र्यन्तरजन्यत्वाच्च । अतोऽपि काम्ये नित्ये चेच्छाविषयत्वं प्रयोजनत्वमपूर्वस्य लिङ्गादिना न बोध्यते अपूर्वेच्छाया: शाब्दज्ञानात् पूर्वं असत्त्वात् किन्तु शाब्दकार्यताज्ञानात् सेति । अथ नित्ये कार्यत्वेनैवापूर्वस्याभिधानं न तु स्वत: प्रयोजनत्वेन किन्तु लिङ्गा अपूर्वे बोधिते तस्य स्वत: प्रयोजनत्वमिच्छाविषयत्वं सम्भवति सुखज्ञानवदपूर्वज्ञानस्यापि स्वत एवेच्छाजनकत्वात् तत: काम्यापूर्वसाधनताज्ञानान्नित्ये कार्यताबोधात् प्रवृत्तिरिति चेत् न अपूर्वज्ञानस्येच्छाहेतुत्वेनाक्लृप्त्वात् । काम्यापूर्वे हि लोकक्लृप्तेष्टसाधनताज्ञानादेवेच्छा न त्वपूर्वत्वज्ञानात् । शास्त्रस्थस्य शास्त्रजकर्तव्यताज्ञानं बलवदिति चेत् सफलविषयं तथा इदञ्च निष्फलविषयम् । अथ प्रवृत्तिमतो निवृत्तिनियोगेऽधिकार इति यदा भक्षणप्रवृत्तस्तदा तन्निषेधे शाब्दकार्यताधीरिति तया विपरीतप्रयत्ने जनिते रागात् क्रियोत्पत्ति: तेनैव प्रतिबन्धात् रागकारितप्रवृत्तिमुपजीव्य हि निवृत्तिकार्यता शास्त्रेण बोधिता अतस्तेन बोधने स्वफलं विपरीतकृतिरवश्यं उत्पद्येति शास्त्रस्य बलवत्त्वमिति चेत् न निवृत्तिकार्यताबोधेऽपि निवृत्तौ प्रयत्न एव नोत्पद्यते यस्य प्रतिबन्धकता स्यात् स्याच्च निवृत्तिकार्यताबोधकमप्रमाणं निष्फलत्वेन तत्र कृतेरभावात् ।अथ कलञ्जभक्षणस्य निन्दार्थवादेन बलवदनिष्टसाधनत्वावगमात् तद्भक्षणे न प्रवर्तत इति चेत् एवमपि कलञ्जभक्षणे निवर्ततां तदभावे निष्प्रयोजनकतया प्रवृत्तौ किमायातमिति । एतेन नित्यापूर्वसाधने सन्ध्यावन्दनादावपि प्रवृत्तिरपास्ता क्रियाया: कष्टत्वात् लोके पचेतेत्यादौ कार्यत्वेष्टसाधनत्वरूपधर्मशक्तत्वेन ज्ञाता लिङ्ग स्वर्गकामो यजेतेत्यादौ तदन्वयं यागे योग्यतादिवशाद् बोधयतीति न वेदे धर्मिणि शक्तिकल्पना प्रतीता च स्वर्गसाधनता साक्षादसाधनस्य यागस्य व्यापारमन्तरेणानुपपद्यमाना तन्निर्वाहकं व्यापारमपूर्वं कल्पयति । ननु निरुपधिपूर्ववर्तिता कारणता सा व्यापारेण निर्वाह्यत इत्यत्र कोऽर्थ: किं क्रियते उत ज्ञाप्यते नाद्य: उत्तरवर्तित्वेन व्यापारस्य तत्रासामाथ्र्यात् नेतर: लिङ्गैव तद्बोधनात् चिरध्वस्तं कारणं व्यापारेण व्याप्तमिति चेत् न विपक्षे बाधकाभावेनाप्रयोजकत्वादन्यथा ऐन्द्रियकं कारणमतीन्द्रियव्यापारकमिति यागानुभवयोदर्शनात् तथा कल्प्यते ।

प्रायश्चित्तादीनाञ्च फलप्रतिबन्धकत्वमेव प्रायश्चित्तस्य तस्मादेनस: पूतो भवतीति यत् फलं श्रुतमस्ति तस्य निषिद्धक्रियात: फलभाक् न भवतीत्यर्थ: *धर्म: क्षरति कीर्तनादित्यर्थ: । क्षरतीत्यत्र बाधकं विना न लक्षणेति चेत् न उपस्थितत्वेन विहितक्रियायामेव धर्मपदशक्तिग्रहस्य बाधकत्वात् । न चैतस्य मुख्यत्वार्थं पदार्थान्तरे शक्ति: लक्षणोच्छेदापत्ते: विहितक्रियाकर्तृत्वज्ञानेन धार्मिकपदप्रयोगाच्च । एतेन देवदत्ताद्यशरीरं देवदत्तविशेषगुणप्रेरितभूतपूर्वकं जन्यत्वे सति तद्भोगसाधनत्वात् तन्निÐम्मतरुग्वदित्यनुमानात् तत्सिद्धिरिति परास्तम् । जन्मान्तरीयज्ञानादिभिरेव तज्जनकत्वाभिमतै: सिद्धसाधनादिति मैवं चिरध्वस्तस्य व्यापारसत्त्वे कारणत्वमिति निरुपाध्यन्वय-व्यतिरेकाभ्यां व्याप्त्यवधरणात् यागस्य चिरध्वस्तकारणत्वेन व्यापारकल्पनात् । कार्ये व्यापारस्य पृथगन्वय-व्यतिरेकग्रहस्तद्व्यापारकत्वे उपाधिरिति चेत् न संस्कारे तदभावेऽप्यनुभवस्य तद्व्यापारकत्वात् । न चाप्रयोजकत्वं यागो यदि चिरध्वस्तत्वे सति सव्यापारो न स्यात् स्वर्गसाधनं घटवदिति विपक्षे बाधात् । न चात्र कारणताग्राहकाभाव उपाधि: तेनापि समं व्याप्त्यवधारणे तस्याप्यापादनात् । न चैन्द्रियकस्यातीन्द्रियव्यापारवत्त्वनियम: सव्यापारत्वे कार्याव्यवहितपूर्वसमये असत्त्वस्योपाधित्वेनाप्रयोजकत्वात् । नन्वेवं सन्ध्यावन्दनाकरणस्य दु:खसाधनत्वश्रुते: तत्करणप्रागभावो दु:खहेतुस्तथाच तस्य स्थिरत्वेन दु:खजननसम्भवात् न पापे प्रमाणम् । न च प्रायश्चित्तवैफल्यं प्रागभावनाश एव तेन क्रियत इति तन्न ध्वंस-प्रागभावानवच्छिन्नकालस्य प्रतियोगिकालत्वेन तदा करणापत्तेरिति चेत् न सन्ध्याकालीनाकरणस्य दु:खजनकत्वेन विशिष्टस्य सन्ध्याकालापगमेऽनुपगमात् । न च सन्ध्याकालीनाकरणे विशेषणं किन्तु प्रतियोंगिनि करणे तथाच विशिष्टाभाव: स्थिर एवेति वाच्यम् । सन्ध्याया द्व्यकरणेऽन्वयस्तस्य पदार्थत्वात् न तु करणे तस्य पदार्थैकदेशत्वेनाप्रधानत्वात् तथापि ध्वंस एव व्यापारोऽस्तु तव सहभावानिरूपकस्यापि कारणत्वात् तस्यानन्तत्वेऽपि स्वभावात् सावधिफलजनकत्वम् । यत्र यद् ध्वंसोहेतुस्तत्र तत्प्रागभावोऽपीति चेत् न दु:खध्वंसजन्यदध्नि मिथ्याधीध्वंससाध्यमुक्तौ च व्यभिचारात्*

प्रतिबन्धकाभावत्वेन हेतुत्वे तथाभावाच्च । ध्वंसेनानुपपत्ति: कथं तेनैव समाधातव्येति चेत् न ध्वंसे सति तद्व्यापारत्वज्ञानं विनानुपपत्तेस्तद्व्यापारत्वकल्पनया शान्तेरिति । मैवं । प्रतियागि-ध्वंसयोरेकत्राजनकत्वात् । न हि नियमतो यद्ध्वंसे सति यदभवति तत् तत्र कारणम् ।

न च संसर्गाभावत्वेन हेतुत्वे तथेति वाच्यम् । व्यभिचाराभावेन तस्यापि प्रयोजकत्वात् । अथ शब्दाद् यागकारणता व्यापारं विना तदनुपपत्ते: तज्जन्यध्वंसस्य कारणत्वकल्पनमित्युभयमपि जनकं अन्यत्र तु मानाभावान्न तथेति चेत् न यागध्वंसस्य यागजन्यस्वर्गं प्रति जनकत्वस्य प्रमाणान्तरविरोधेनार्थापत्त्याप्यकल्पनात् । अस्तु तर्हि देवताप्रीतिरेव व्यापार इति चेत् यागस्य देवताप्रीतिहेतुत्वे मानाभावात् गङ्गास्नानादौ देवताप्रीतिहेतुत्वे मानाभावात् गङ्गास्नानादौ देवताविरहेण तदसम्भवात् । न च तत्रापि तत्प्रीति: तस्य तत्प्रीतिहेतुत्वे मानाभावात् लाघवेन कर्तु-भोक्तृगतव्यापारकल्पनाच्च । ननु नायं नियम: पुत्रकृतगयाश्राद्धादिना पितरि पितृकृतजातेष्ट¬ा पुत्रे चादृष्टोत्पत्ते: । अथ तत्रापि कर्तर्यैवादृष्टं विहितक्रियाया: यागस्येव कर्तृगतादृष्टजनकत्वात् । न च मुक्ते पुत्रे तददृष्टनाशात् पितरि न स्वर्ग: स्यादिति वाच्यम् । अदृष्टस्य

फलनाश्यतया पितरि स्वर्गाभावेनादृष्टानाशात् स्ववृत्तिभोगजनकादृष्टस्य मुक्तिविरोधित्वात् न तु पितृगतमदृष्टं जन्यते मुक्ते पितरि दोषाभावेन योगिनामिव विहितक्रियायाः पित्रदृष्टाजनकत्वात् तथात्वे च साङ्गमपि श्राद्धादिकं निष्फलं स्यादिति तद्विधेरप्रामाण्यापत्तिः पुत्रगतादृष्टेन च मुक्ते पितरि सुखोत्पत्तौ न विरोधः योगिनामिव सुखोत्पत्तौ दोषस्याहेतुत्वात् । अथ पितृसुखं पितृपुण्यजन्यमिति पितरि पुण्यं तेन विना तदसम्भवात् न पुत्रे तत्र फलप्रसङ्गादिति पितृस्वर्गकामानाजन्यक्रिया पितृपुण्यहेतुरिति पुत्रक्रियापि तज्जनिकेति चेत् एवं पितृक्रियापि पितृपुण्यजनिकेति न तां विना पितरि पुण्यं पुत्रक्रिया च पुत्रपुण्यजनिकेति पुत्रे पुण्यं पितृस्वर्गकामनाजन्यपुण्यत्वेन पितृस्वर्गहेतुरस्तु तत्पुण्यं पितृवृत्ति तत्सुखहेतुपुण्यत्वात् न पुत्रवृत्ति तत्सुखहेतुपुण्यत्वादिति चेत् न तत्पुण्यं न पितृवृत्ति तत्कृत्यजन्यपुण्यत्वात् पुत्रवृत्ति वा तत्कृतपुण्यत्वात् तस्मात् पितृस्वर्गकामनाजन्यपुण्यत्वेन पितृस्वर्गहेतुतेति पुत्र एव तत्पुण्यमिति । मैवं । स्वर्गोपपादकं ह्यपूर्वं स्वर्गाश्रये कल्प्यते प्रथमोपस्थितत्वात् लाघवात् कल्पनायाः साक्षादुपपादकविषयत्वाच्च । न च स्वर्गहेतुकामनाश्रये स्वर्गकामनाजन्यक्रियाकर्तरि वा विलम्बोपस्थितिकत्वात् गौरवात् परम्परया स्वर्गोपपादकत्वाच्च । यदि च पुत्रकृतपुण्येन मुक्तस्य पितु#ुः शरीराद्युत्पत्तिः सुखञ्च स्यात् तदा साक्षिविधया असत्याभिधानादिपुत्रक्रियाजन्यपापेन *स विष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते* इत्यादिबोधितनरकभागितापि मुक्तस्य पितुः स्यात् । तथा च पुत्रकृतततथाविधशङ्कया न कश्चिन्मोक्षार्थं ब्राह्मचर्यादिदुःखेनात्मानमवसादयेत् *दुःखेनात्यन्तं विमुक्तश्चरति न स पुनरावर्तते*इति श्रुतिविरोधश्च तथाच मुक्तस्य सुख-दुःखे शरीरञ्च भवतीत्पदर्शनं मुक्ते पितरि श्राद्धादिना दोषाभावादेव नादृष्टमुत्पद्यते । न चैवं साङ्गश्राद्धस्यापि निष्फलत्वं अदृष्टोत्पत्तौ स्वरूपसतोदोषस्याङ्गस्य वैगुण्यात् यथा विघ्नहेतुदुरितशून्येन कृतं मङ्गलं न पापध्वंसं जनयति स्वरूपसतः पापस्याङ्गस्याभावादेवञ्च यागस्यापि व्यधिकरणो व्यापारो भविष्यतीति । उच्यते । विहितक्रियाया कर्तृगतव्यापारद्वारा कालान्तरभाविफलं जन्यत इत्युत्सर्गः स च बलवता बाधकेनापोद्यते प्रकृते च बाधकं नास्ति यथा शास्त्रदेशितं फलमनुष्ठातरीत्युत्स्वर्गः स च बलवता बाधकेनापोद्यते प्रकृते च बाधकं नास्ति यथा शास्त्रदेशितं फलमनुष्ठातरीयत्युत्स्वर्गः । पुत्रकृतगयाश्राद्धास्य पितृस्वर्गं प्रति पितृकृतजातेष्टेः पुत्रपूतत्वादिकं प्रति हेतुत्वस्य शास्त्रेण बोधनात् । नन्वयं नियम एव पितृयज्ञ-जातेष्ट¬ादौ परम्परासम्बन्धेन कर्तृगतमेव फलम् । न हि यस्य कस्यापि पितरि पुत्रे वा फलं किन्तु स्वपितृ-पुत्रयोस्तथाच स्वपितृगतत्वं स्वर्गभागिपितृकत्वं वा परम्परासम्बन्धः फलेन पुत्रस्य एवं पूतपुत्रकत्वादिकमपि पितृगतमेव । न च पलस्य कर्तृगत्वं साक्षात् सम्बन्धेनैवेति वाच्यम् । ग्राम-पशु-पुत्र-हिरण्यादीनां परम्परया कर्तृगत्वमिति व्यभिचारात् । न हि ग्रामादयः साक्षात् कर्तृ-सम्बद्धाः । एवं फलस्य साक्षात् कर्तृगामित्वबोधने शास्त्रस्योत्सर्गो न तु फलस्य कर्तृगामिताबोधने ।

यत्तु स्वर्गभागिपितृकत्वं न फलं तत्कामनाया अधिकारिविशेषणत्वाभावात् पितृगतस्वर्गकाम इत्यादिश्रुतेः ।

स्वतश्च तथा कामनया प्रवृत्तौ श्रुतकामनाविरहेण प्रयोगेऽङ्गवैगुण्यात् फलाभावप्रसङ्गः । किञ्च स्वर्गभागिपितृकत्वं विशिष्टं तत्र विशेष्यं

तत्पितृकत्वं न काम्यं न वा फलं सिद्धत्वातदसाध्यत्वाच्च किन्तु विशेषणं पितृगतस्वर्ग इति स एव फलमिति । तन्न । न हि स्वर्गभागिपितृकत्वं फलं अपि तु स्वर्गेण समं पुत्रस्य परम्परासम्बन्धरूपं तदुक्तमिति ।

उत्यते यदि परम्परासम्बन्धेन पुत्रगतत्वं पितृस्वर्गस्य तदा संयुक्तसमवायादिना पुत्रेतरस्यापि फलं स्यात् । स सम्बन्धो न शास्त्रेण बोधित इति चेत् तर्हि स्वर्गभागिपितृकत्वमपि न तथा शास्त्रेणबाधितत्वात् ग्राम-पशु-हिरण्यादीनाञ्च सिद्धत्वेन न काम्यत्वं किन्तु तद्विषयकं स्वत्वं काम्यं फलमपि तदेव तच्च साक्षादेव कर्तृगतमिति कर्तृगतत्वेन फलकामना तद्गतमेव शास्त्रदेशितं फलम् । अतएव कामनाविषयः स्तगत एव स्वर्गः फलं यागादेः स्वर्ग-पूतत्वादेश्च पितृ-पुत्रगतत्वेन काम्यत्वमिति श्राद्ध-जातेष्ट¬ादेः पितृ-पुत्रगतमेव फलम् । एवञ्च मातापित्रादिगतस्वर्गकामनया पुत्रादिना कृतं पुष्करिणीमहादानादिकं मातापित्रादिस्वर्गजनकमेव कामनाविषयस्वर्गसाधनत्वेन तेषां श्रुतत्वात् न हि स्वगतस्वर्गकामस्य कर्तव्यतां पुष्करिण्यादेर्विधिबो#ॅधयति तथा श्रुतेः किन्तु स्वर्गकामस्य स्वर्गश्च स्वगतः परगतो वेति स्वर्गकामत्वमविशिष्टं यजेतेत्यात्मनेपदमपि कर्तभिप्रेतक्रियाफलमात्रजनकत्वे न च स्वर्गकामो दद्यादित्यादौ स्वगतस्वर्गकामनाया अन्तरङ्गत्वादौत्सर्गिकत्वाच्च स्वर्गकामत्वेन स्वगतस्वर्गकाम एवोच्यते सामान्ये बाधकं विना विशेषपरत्वे मानाभावात् ।

केचित्तु सम्यग् गृहस्थाश्रमपरिपालनस्य ब्राह्मलोकावाप्तिः फलं श्रूयत इति जातेष्टि-पितृयज्ञयोरपि गृहस्थकर्मत्वेन तदेव फलमिति फलस्य कर्तृगामित्वे नियम एव प्रातिस्विकफलाभिप्रायेणोत्सर्ग इत्याहुः । ननु यावन्नित्यपरिपालनस्य तत् फलं न तु काम्यश्राद्धादेः काम्यान्तर्भावे मानाभावात् यावत् काम्यानुष्टानाशक्तेश्च । यावच्छक्यानुष्ठानस्यापि नात्रान्तर्भावः कामनाविरहादिनाप्यकरणात् यावन्नित्यानुष्ठाने तत्फलाभावप्रसङ्गात् नित्यस्यैवावश्यकत्वेनोपस्थित्यान्वयाच्च । अपि च तैः कर्मभिः प्रत्येकमुत्पत्त्यपूर्वं तैश्च परमापूर्वं जन्यते इति न गौरवान् मानाभावाच्च । किन्त्वन्तिमक्रिया परिपालनरूपक्रियान्तरेण वेति न सर्वं कर्म ब्राह्मलोकावाप्तिफलकमिति । मैवं । भगवद#्द्देशेन कृतस्य काम्यस्य नित्यस्य वा यस्य कस्यापि कर्मणः परिपालनाद् ब्राह्मलोकावाप्तिः फलं श्रूयत इति जातेष्टि-पितृयज्ञयोरपि तथा कृतयोस्तदेव फलम् । तथा च भगवद्गीता *यज्ञायाचरतः कर्म कर्मग्रन्थिर्विलीयते । यथार्थात्कर्मणोऽयत्र लाकोऽयं कर्मबन्धनः* । इति तच्च कर्म यज्ञार्थतया प्रत्येकमेव तत्फलसमर्थं सम्बलनन्तु मङ्गलवदुपयुज्यते अन्यथा एकप्रयोगस्य व्यवधानादसम्भवः परिपालनन्तु कर्तव्यमित्येव कारणम् । तदुक्तं *ददामि देयमित्येव यज्ञे यष्टव्यमित्यहमिति ।*

यत्तु निषिद्धासम्बन्ध एव सम्यक्त्वं न तु विहितमात्रानुष्ठानमिति । तन्न । यत्किञ्चिन्निषिद्धासम्बन्धस्याभावात् सर्वनिषिद्धासम्बन्धस्य सर्वत्र सुलभत्वादिति सम्प्रदायः ।

अत्र ब्रूमः । भगवदुद्देशेन कृतं किञ्चिदेव कर्म सर्वं काम्यं वा सर्वं नित्यं वा सर्वमिति वा नाद्यः एकेनैव काम्येन नित्येन वा स्नानेन तथा कृतेन तत्फलसिद्धौ बहुवित्तादिसाध्ये श्राद्धादावप्रवृत्त्यापत्तेः । नापरौ अशक्यत्वात् । न तुर्यः जातेष्ट¬ादेर्नित्यत्वाभावात् । तस्मात् सम्यगगृहस्थाश्रमपालनस्य तत्फलं सम्यक्तन्तु सामस्त्यमेव अतो गयाश्राद्धादेर्न ब्राह्मलोकावाप्तिः फलमिति साधुक्तं *शास्त्रदेशितं फलं अनुष्ठातरीत्युत्सर्ग इति । तच्च फलं क्वचिद्विधिवाक्यश्रुतं क्वचिच्चार्थवादिकमिति ।*

# कार्यान्वितशक्तिवादपूर्वपक्षः

नन्वर्थवादादीनां सिद्धार्थतया न प्रामाण्यम् । कार्यन्वित एव पदानां शक्यवधारणात् वृद्धव्यवहारादेव सर्वेषामाद्या व्युत्पत्तिः उपायान्तरस्य शब्दव्युत्पत्त्यधीनत्वात् । तथा हि प्रयोजकवाक्योच्चारणानन्तरं प्रयोज्यप्रवृत्तिमुपलभमानो बालः प्रेक्षावद्वाक्योच्चारणस्य प्रयोजनजिज्ञासायां तदन्वय-व्यतिरेकानुविधायित्वादुपस्थिततत्वाच्च प्रयोज्यवृद्धप्रवृत्तिमेव प्रयोजनमवधारयति न चाकिञ्चित् कुर्वतस्तादर्थ्यं सम्भवतीति तज्जन्यं प्रवृत्त्यनुकूलं कार्यताज्ञानमेव कल्पयति स्वप्रवृत्तौ च तेन कार्यताज्ञानमेव कल्पयति स्वप्रवृत्तौ च तेन कार्यताज्ञानस्य हेतुत्वावधारणात् नान्यत् प्रवृत्तेः कार्यताज्ञानावरुद्धत्वात् । न चैवं शब्दस्य ज्ञानद्वारा प्रवृत्तिहेतुत्वं स्वप्रवृत्तौ बालेन शब्दाहितविशेषस्य कार्यताज्ञानस्य हेतुत्वेनानवधारणात् । ज्ञाने च प्रत्यक्षादिनानोपायकत्वदर्शनात् शब्दाऽपि कार्यताज्ञानहेतुरित्यवधार्य तत्रैव शकि्ंत कल्पयति उपस्थिततत्वात् पश्चादावापोद्धारेण क्रियाकारकपदानां

कार्यान्वितततत्तदर्थेषु शकि्ंत गृह्णाति प्रथमग्रहीतसामान्यशक्त्यनुरोधात् । स्यादेतत् यद्यपि वृद्धव्यवहारादादौ कार्यान्वितधीरनुमिता तथाप्यन्वितमात्रशक्त्#ैयव कार्यतावाचकपदसमभिव्याहारादाकाङ्क्षादिमहिम्ना कार्यान्वितधीसम्भवात् न कार्यांशेऽपि शक्तिः परम्परयापि शब्दस्य कार्यान्वितज्ञानानुकूलत्वादर्थापत्तौ अन्यथोपपत्तिरपि । अवश्यञ्चाकाङ्क्षादेः कारणत्वं कार्यांशे शक्तावपि तद्व्यतिरेकादन्विताभिधानव्यतिरेकनियमात् । सति चाकाङ्क्षादौ कार्यव्यतिरेकदर्शनादन्विताभिधानव्यतिरिको न क्वाप्यस्ति । अन्यथा गवादिपदानां व्यक्तावेव शक्तिः स्यात् संस्कारादेव व्यक्तिलाभदर्शनान्न तथैति यदि तदा कार्यवाचकपदादेव कार्यान्वितलाभ इति किं शक्त#ाय वृद्धव्यवहारे नियमतः कार्यान्वितज्ञानं तत्र दृष्टमिति तत्र शक्तिकल्पने वृद्धव्यवहारे शब्दोपस्थापितेनैवान्वयबोधदर्शनाच्छब्दसन्निधेरेवान्वयबोधहेतुत्व

कल्पने द्वारमित्यादौ शब्द एवाध्याह्रियते । क्वचिदसम्पूर्णवाक्ये वृद्धव्यवहारादाद्यव्युत्पत्तेः शब्दसन्निर्व्यभिचरतीति चेत् तर्हि सिद्धार्थेऽप्यन्वयप्रतीतिदर्शनात् कार्यत्वमपि व्यभिचारि । न च तत्र लक्षणा बाधकाभावात् । शक्तिक्लपनाभिया ह्यन्यत्र लक्षणानुमता इह तु लघीयस्या उभयसाधरणापदार्थमात्रशक्त#ाय मुख्यस्यैवोचितत्वात् । किञ्च कार्यवाचिलिङ्गादीनां आकाङ्क्षाद्युपेतपादर्थान्वितस्वार्थबोधकत्वमवश्यं वाच्यमतो विशेषात् पदान्तराणामपि तथात्वमस्तु लाघवादिति । मैवं । व्यवहारहेतुतयानुमिते हि कार्यान्वितज्ञानेऽन्वय -व्यतिरेकाभ्यां शब्दस्य साक्षात्कारणत्ववधारयति न परम्परया साक्षात्त्वस्यौत्सिर्गिकत्वेन तत्सम्भवे परम्परया अन्याय्यत्वादिति तत्रैव शकि्ंत कल्पयति नान्वितज्ञाने पदार्थज्ञाने वा अप्रवर्तकतया प्रवृत्त्या स्वकारणत्वेन तयोरनुपस्थापनात् । न चान्वितज्ञानशक्तावपि परम्परया कार्यत्वधीः सम्भवतीत्यर्थापत्त्या सैव कल्प्यतां लाघवात् न तु विशिष्टज्ञाने शक्तिरन्यलभ्यत्वात् इति वाच्यम् । अर्थापत्तेः साक्षादुपपादकमात्रविषयत्वेन न्यूनाधिकाग्राहकत्वात् साक्षादुपपादककार्यन्वितज्ञाने शक्तिः कल्प्यते लिङ्गादीनां शक्तेरल्पनात् अन्यलभ्यत्वतर्कस्याप्यभावात् वा आद्यव्युत्पत्तेर्विचार्यत्वात् । किञ्च प्रवृत्तिकारणतयोपस्थितं कार्यन्वितज्ञानमपहायानुपस्थितान्वितज्ञानमात्रे शक्तिकल्पनमयुक्तं हेत्वभावादुपस्थित्यन्तरे च गौरवात् । अथ कार्यन्वितज्ञानोपस्थितावप्यन्वितज्ञानमप्युपस्थितमिति लाघवात् कार्यांशमपहायान्विते शक्तिर्गृह्यतामिति चेत् न ज्ञाने हि पदानां शक्तिः शक्यत्वान्नार्थेषु अन्यच्च कार्यान्वितज्ञानं अन्यदेवान्वितज्ञानं विषयभेदेन ज्ञानभेदात् । तदुक्तमभाववादे अन्यद्भूतलज्ञानमन्यच्च घटवद्भूतलज्ञानमिति अन्वितज्ञानमुपस्थाप्य तत्र शक्तिग्रह इति गौरवमेव । गघुनि शक्ये सम्भवत्यन्यलभ्यं गुरु न तथैति चेत् न युगपदुपस्थितौ तथात्वात् । न च तस्याप्यनुपस्थितिः पुरुषविशेषदोषात् सर्वैरेवाद्यव्युत्पत्तौ तथानवगमात् । तथापि न कार्यान्विते शक्तिः कार्यवाचिलिङ्गादीनां व्यभिचारादिति चेत् न सर्वपदानां कार्यत्वविशिष्टधीजनकत्वात् । तच्च कार्यान्वितस्वार्थाप्रतिपादकतयेतरान्वितस्वार्थकार्यप्रतिपादकतया वेति । एवञ्च कार्यान्वितव्युत्पत्तौ सत्यामनाकाङ्क्षादौ व्यभिचारादाकाङ्क्षादेरुपाधित्वम् । तथाचोपजीव्यप्रथमभाविकार्यान्वितव्युत्पत्त्यनुरोधेन विध्यश्रुतावपि कार्यध्याहारः क्वचिल्लक्षणा क्वचिदसंसर्गाग्रह इति सिद्धार्थेऽन्वयप्रतीतिदर्शनादुत्तरकालमन्वितमात्रे शक्तिरेव कल्प्यतां प्राचीनकार्यान्वितज्ञानं बाध्यतामित्यप्यत एव निरस्तम् । पूर्वकल्पनातः कल्पनान्तरप्रसङ्गात् उत्तरकालभाविसिद्धार्थप्रयोगस्य लक्षणादिभिरप्युपपत्तेः अनन्यथासिद्धत्वाभावेन प्राचीनज्ञानाबाधकत्वात् उपजीव्यव्याघाताच्च । अथ सिद्धार्थेऽपि व्युत्पत्तिः तथाहि उपलब्धचैत्रपुत्रजन्मा बालस्ताद्दशेनैव वार्ताहारेण समं चैत्रसमीपं गतश्चैव पुत्रस्ते जात इति वार्ताहारवाक्यं श्रृण्वन् चैत्रस्य मुखप्रसादं गृह्णन् श्रोतुर्हर्षमनुमिनोति हार्षाच्च तत्कारणं पुत्रजन्मज्ञानं कल्पयति उपस्थित्वादुपपादकत्वाद न्योपस्थितौ गौरवाच्च तत्र वाक्यस्य कारणतां कल्पयति लाघवादिति चेत् न हर्षहेतूनां बहूनां सम्भवात् हर्षेण लिङ्गेन पुत्रजन्मज्ञानस्य बालेनानुमातुमशक्यत्वात् प्रियान्तरज्ञानस्य परिशेषयितुमशक्यत्वाच्च । अथ पुत्रजन्मज्ञानाव्यभिचारिवृद्धिनाद्यादिक्रियाविशेषदर्शनात् पुत्रजन्मज्ञानानुमानमिति चेत् तर्हि पुत्रस्ते जात इति वाक्यं तत् क्रियाकर्तव्यपरमेवेति कार्यान्वितज्ञानजनकत्वमेव तस्य प्रथमतो गृह्यते उत्तरकालं पुत्रजन्मज्ञानानुमानमिति न व्युत्पत्तिः कार्यं जहाति यत्रापीह सहकारतरौ मधुरं पिको रौतीति प्रसिद्धार्थपदसमानाधिकरण्यादिभिर्व्युत्पत्तिस्तत्रापि व्यवहारधीन्युत्पत्तिपूर्विका कार्यान्वित एव युक्ता पिकपदशक्तिः पूर्वं नावधृतेति चेत् न तत्र पिकमानयेत्यादौ कस्यचित् कार्यान्वितएव व्युत्पत्तेः उपजीव्यजातीतया च तस्या बलवत्त्वं किञ्चेदमपि

कार्यान्वितज्ञानशक्तं पदत्वादिति सामान्यतोऽवगतं स्वार्थाविशेषः परं नाधिगतः स इदानीं सुहृमदुपदेशादिभिरवगम्यते । अतः सिद्धं प्रवृत्तिपराणां शब्दानां प्रवर्तकज्ञानजनकत्वं तच्च क्वचित् साक्षात् कार्यान्वयात् क्वचित् परम्परया कार्यान्वयात् अत एव विधिशेषीभूतार्थवादानां

स्वर्गादिपदशक्तिग्राहकाणाञ्च प्रवृत्तिपरत्वेन परम्परया कार्यान्वयात् कार्यान्वितस्वार्थाबोधकत्वमिति । यत्र पुराण-भारतादि पाठे फलश्रुतिरस्ति तत्रार्थवादकल्पितविधिशेषीभूतत्वेन प्रवृत्तिपरत्वमेव तेषामतिपरम्परया कार्यान्वितस्वार्थबोधकत्वं स्वरूपाख्यानपराणान्तु काव्य-नाटकादीनां पदार्थासंसर्गाग्रहेण संसर्गव्यवहारो न संसर्गग्रह इति ।

## कार्यान्वितशक्तिवादसिद्धान्तः

अत्रोच्यते घटमानयेति वाक्यश्रवणानन्तरं प्रयोज्यस्य धटानयनगोचरप्रवृत्त्या घटानयनकार्यताज्ञानमनुमितं बालेन न तु कार्यान्वितज्ञानं प्रवृत्तिविशेषे तस्याहेतुत्वाद्घटादिपदशक्तिग्रहे तस्यानुपयोगाच्च । तत्र तज्ज्ञानविशेषे घटमानयेतिवाक्यविशेषस्यानाकलितपदविभागस्य हेतुत्वमवधार्य घटपद-द्वितीया-धातु-विधिप्रत्ययानां प्रत्येकमावापोद्वापद्वारेण घटकर्मत्वानयन -कार्यत्वज्ञानेषु प्रत्येकं कारणत्वमवगम्य शकि्ंत कल्पयति । पश्चात् प्रवृत्तिसामान्येनानुमितकार्यान्वितज्ञान वाक्यमात्रस्यान्यलभ्यत्वेन कार्यांशमपहायान्वितज्ञानमात्रे शकि्ंत कल्पयति न तु प्रथमं वाक्यमात्रस्य कार्यान्वितज्ञानमात्रहेतुत्वकल्पनं । अथ घटानयनक्रियायाः प्रथमं क्रियात्वज्ञानात्प्रवृत्तिमात्रानुमानं तेन च कार्यान्वितज्ञानमनुमाय तत्र वाक्यमात्रस्य हेतुत्वं कल्पयित्वा शकि्ंत कल्पयति तदुत्तरं विशेषयोः कार्य-कारणभावधीरिति चेत् न प्रथमं प्रवृत्तिमात्र-कार्यान्वितज्ञानमात्रयोरनुमानं बालस्य क्रमशोभवतीत्यत्र मानाभावात् घटादिपदशक्तिग्रहस्य तेन विनापि सम्भवात् । न च तदनुमानसामग्री तदावृत्तेति वाच्यम् । तदा व्याप्त्यादिस्मृतौ मानाभावात् । सामान्ययोः कार्य-कारणभावग्रहो विशेषयोस्तथात्वग्रहे हेतुरिति चेत् न विशेषयोरन्वय-व्यतिरेकाभ्यामेव तद्ग्रहात् । यथा धूम-वह्निविशेषयोः कार्य-कारणभावग्रहे तत्सामान्ययोरपि हेतु-हेतुमद्भावो भासते अन्यथा न सकृद्दर्शनगम्या व्याप्तिः स्यात् तथात्रापि विशेषयोः कार्य-कारणभाववित्तिवेद्य एव सामान्ययोस्तथाभाव इति चेत् न प्रत्यक्षेण विशेषग्रहे योग्यत्वात् सामान्यमपि भासते प्रकृते च कार्यविशेषेण कारणविशेषानुमितौ न सामान्यमिति न युगपदुपस्थितिः । अथ विशेषयोः कार्य-कारणभावात् सामान्ययोरपि तथात्वमनुमापयतीति चेत् तर्हि विशेषयोः कार्य-कारणभावावगमः प्राथमिक इति तन्मूलकः प्रथमं पदविशेषे शक्तिग्रह एव स्यात् निष्प्रयोजनकत्वेनान्तरानुमितौ मानाभावात् यच्चोक्तं प्रवृत्तिकारणतयोपस्थितं कार्यान्वितज्ञानमपहायान्वितज्ञानं कल्पयित्वा तत्र शक्तिकल्पनमयुक्तं उययथा गौरवादिति तन्न कार्यान्वितज्ञानेऽन्वितज्ञानत्वस्य सत्त्वात् तद्विशेषत्वात् तस्य अतस्तत्रैव शक्तिग्रहो न कार्यत्वांशेऽपि । अतएव घटवद्भूतलज्ञाने भूतलज्ञाननत्वमपीति तद्भिन्नं तज्ज्ञानमभावव्यवहारे कारणं त्वयापि स्वीकृतं । अस्त्येवं किन्तु तदुपस्थितावप्यन्वितज्ञानत्वं न विषय इति तस्यैवोपस्थित्यन्तरं कल्प्यमिति चेत् न कार्यान्वितज्ञाने अन्वितज्ञानं विशेष्यमिति तदुपस्थितौ तस्यापि विषयत्वात् विशिष्टज्ञानसामग्रीतोविशेष्यभानावश्यम्भावात् अन्यथा अन्यज्जातिज्ञानं अन्यच्च जातिविशिष्टज्ञानमिति व्यक्तिज्ञानमपहाय जातिज्ञानं क्वापि नोपस्थितमिति न तव जातिरेव पदार्थः स्यात् जातेः केवलोपस्थितौ च व्यक्तिसमानसंवित् संवेद्यत्वं न स्यात् । अथ जातिविशिष्टज्ञानोपस्थितेव्र्यव्यक्तिज्ञानविषयत्वेऽपि गौरवाद्व्यक्तेरन्यलभ्यत्वाच्च जातिविशिष्टज्ञानत्वं न शक्यतावच्छेदकं किन्तु जातिज्ञानत्वं लाघवादिति मतं तर्हि तुल्यम् । न च युगपदुपस्थितौ लाघवावतारोन चात्र युगपदुपस्थितिरिति वाच्यम् । विशिष्टज्ञानस्य विशेष्यविषयत्वनियमात् किञ्च ममेदं कार्यमिति ज्ञानं साक्षादुपपादकं प्रवृत्त्या स्वकारणत्वेनानुमितमतस्तत्र शकि्ंत गृहृणीयात् साक्षादुपपादकविषयत्वात् कल्पनायाः शकि्ंत गृहृणीयात् साक्षादुपपादकविषयत्वात् कल्पनायाः । न त्विदं कार्यज्ञाने तस्य साक्षादुपपादकत्वात् । अथेदं कार्यमितिज्ञाने शक्त#ैयव परम्परयानुमानद्वारा ममेदं कार्यमिति ज्ञानसम्भवात् अन्यलभ्यत्वेन न शक्तिकल्पना तर्हि इतरान्वितज्ञानशक्त#ैयव कार्यवाचकपदसमभिव्याहारारेणैव कार्यान्वितज्ञानसम्भवात् अन्यलभ्यत्वेन न तत्र शक्तिकल्पनमिति तुल्यम् ।

नन्विदं कार्यमिति ज्ञानं साक्षादेव प्रवर्तकं कर्तव्यताप्रयोजकयावदेकविशेषणस्य स्वगतत्वप्रतिसन्धानं सहकारि तेन नातिप्रसङ्गः । न च सहकारिविलम्बेन कार्यानुत्पादे साक्षात्साधनत्वं निवर्तत इति चेत् न लाघवेन ममेदं कार्यमिति ज्ञानादेव प्रवृत्तेः यथा च भविष्यद्विषया कार्यतानुमितिस्तस्थोक्तमधस्तात् । अपि च यादृशस्य पुरुषस्याविगीतकृतिसाध्यमिदं तादृशोऽहमिति धीर्न प्रवृत्तिहेतुः कृतक्रियमाणविषयककृतिसाध्यताज्ञानस्य सिद्धविषयस्यासिद्धविषयेच्छानुत्पादकत्वात् इच्छायाः स्वप्रकारकधीसाध्यत्वेन कृत्या साधयामीतीच्छायाः स्वप्रकारधीसाध्यत्वेन कृत्या साधयामीतीच्छायाः स्वकृत्यनन्तरभविष्यत्तारूपकृतिसाध्यताधीजन्यत्वाच्च । अपि चास्तु प्रथमं कार्यान्वितज्ञाने वाक्यस्य

साक्षातत्कारणताबोधात्तत्र शक्तिग्रहः तथापि पश्चादावापोद्वारेण पदविशेषस्येतरान्वितस्वार्थज्ञाने शकि्ंत कल्पयति लाघवात् । न तु कार्यत्वांशेऽपि गौरवात् अन्यलभ्याच्च । न चैवं प्रथमप्रवृत्तस्य साक्षात्कारणताबोधस्य तन्मूलककार्यान्वितशक्तिग्रहस्य च बाधा स्यादिति वाच्यम् । इष्टत्वात् अन्यथासिद्धिमपश्यतो हि बालस्य स भूत इति तस्याबलवत्त्वात् गौरवान्यलभ्यत्व-तर्क-सहकृतप्रमाणजन्यत्वेनोत्तरस्य बलवत्त्वात् । न चोपजीव्यबाधान्न तथा प्रत्यतीति वाच्यम् । उपजीव्यत्वे मानाभावात् । दैवाद्धि प्रथमं तद्वृत्तं न तु पदविशेषशक्तिग्रहे तस्य हेतुत्वतेन विनापि तत्सम्भवात् । न च प्राथमिकत्वेन बलत्त्वस्य व्यभिचारात् । नापि सर्वैः प्रथमं प्रतीयमानत्वेन बलवत्त्वं सर्वेषा शरीराहम्प्रत्यये चन्द्रतारकादिपरिमाणस्य सर्वैरल्पत्वग्रहे च व्यभिचारात् । अतएव पूर्वकल्पनातः कल्पनान्तरप्रसङ्गः स्यादिति । निरस्तम् । यत्रानन्यथासिद्धतयोपजीव्यतया वा बलत्त्वं पूर्वकल्पनायास्तत्र तथात्वात् । किञ्च प्रथमं कार्यान्वितज्ञाने वाक्यस्य साक्षात् परम्पोदासीनं कारणत्वमात्रं गृह्णते न तु विशेषोऽपि उपायस्यान्वयऽव्यतिरेकादेरुभयविशेषसाधारणत्वेन तत्संशयकत्वात् उत्सर्गोऽपि

बाधकाभावनिश्चयसहकृतो निश्चायकः । न चान्यलभ्यत्वस्य बाधकस्याभावमापाततः स्वतो दर्शनमात्रेण बालो निश्चेतुमर्हति । अतएव प्रामाण्यस्यौत्सर्गिकत्वेऽपि बाधकाभावसहकृतनिश्चयादेव निश्चयः अन्यथा प्रमाऽप्रमा वा साक्षात्परम्परासाधनं वेति संशयः क्वापि न स्यात् । यच्च हर्षहेतूनां बहूनां सम्भवादित्यादि तन्न स्वतोहीतहर्षहेतुस्तनपानादेर्बाधावतारदन्यस्य हर्षहेतोरग्रहादुपस्थितत्वादुपपादकत्वाच्च पुत्रजन्मज्ञानस्यैव हर्षहेतुत्वेन कल्पनात् । अन्यप्रियज्ञानं हर्षकारणं भविष्यतीति शङ्कायाः कथमेवमिति चेत् न एवं हि कार्यान्वितज्ञानेऽपि शक्तिर्न गृह्यते प्रयोज्यज्ञानहेतूनां बहुत्वादनन्यथासिद्धशब्दानुविधानस्य च तुल्यत्वात् अन्यप्रियस्याज्ञानाच्च ज्ञानेऽपि वा तदा तदुपस्थितिनियमे मानाभावात् सन्देहाभावोपपत्तेः लिङ्गाभासजन्यकाकतालीयसम्पन्नसंवादानुमितिवद्धहर्षेण लिङ्गेन पुत्रजन्मज्ञानानुमानसम्भवाच्च । न चासासजत्वेनानुमितेभ्र्रमत्वे तद्धेतुकशक्तिग्रहो भ्रमः विषयस्य तथाभावेन तयोर्यथार्थत्वात् । यथा कश्चित् सूत्रसञ्चाराधिष्ठितं दारुपुत्रकं घटमानयेति नियुङ्क्ते स च तमानयति तदा चेतनव्यवहारादिव तद्दर्शी बालो व्युत्पद्यते । इयं क्रिया कृतिजन्या सा ज्ञानजन्या तत् वाक्यजन्यमित्युनुमिति परम्पराया भ्रमत्वेऽपि तद्धेतुशक्तिग्रहः तज्जन्यशाब्दबोधश्च यथार्थ एव विषयस्य तथाभावादिति सिद्धं सिद्धार्थेऽपि शक्तिग्रह इति । अतएव *यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरं । अभिलाषोपपनीतञ्च तत् सुखं स्वः पदास्पदं* । इत्यर्थवादोपस्थिते सुखे वेदादेव स्वर्गपदस्य शक्तिग्रहः न तु चन्दनादौ सुखोपरागेण स्वर्गपदप्रयोगाद्धेयतादशायाञ्चाप्रयोगात् सुखमेव शक्यं बहुवित्तव्ययायाससाध्ये तत्कर्मणि सुखमात्रार्थी न प्रवर्तत इत्यर्थवादोपस्थिते स्वर्गपदतात्पर्यं । न चार्थवादस्योपजीव्यत्वात् तदुनीते ततएव शक्तिग्रहः तस्य स्वर्गपदतात्पर्यविषयत्वेनास्पदत्वोपपत्तेर्न अतिशयितसुखत्वं वाच्यं प्रयोगोपाधिर्वातिशयः । न चातिशयस्य सावधित्वेन चन्दनसुखेऽस्मादयं स्वर्ग इति धीः स्यात् रसादाविवातिशयस्य जातित्वेनावध्यनिरूप्यत्वात् । अतिशयपदप्रयोगस्तु इतरज्ञानापेक्ष इति चेत् न विचित्रहेतुसाध्यतया विलक्षणातिशयस्यानेकत्वेनाननुगमात् सुखत्वावान्तरातिशयत्वेनास्यानुगमेऽप्यनध्यवसायेन शक्त्यग्रहादप्रवृत्त्यापत्तेः । सुखत्वावान्तरजातेश्च सुखमात्रसाधारणत्वात् प्रयोगोपाधेर्निराकर्तव्यत्वात् लोके च लक्षणा । ननु दुःखासम्भिन्नसुखस्य शक्यत्वे चन्दनादौ स्वर्गपदप्रयोगोलक्षणयापि न स्यात् सातिशयसुखस्य शक्यत्वे तत्सम्बन्धितया चन्दनादौ लक्षणा भवति तस्मात् दुःखासम्भिन्नत्वादिनोपलक्षिता सुखत्वावान्तरजातिरेव वाच्या एकजातिसत्त्वेऽपि विलक्षणहेतुसाध्यस्वर्गेष्ठकजातौ मानाभावात् । विहितकर्मजन्यता च तत्तद्विशेषत्वेनैव अननुगतस्यापि जन्यतावच्छेदकत्वात् सम्बन्धमात्रञ्च लक्षणाबीजमिति वक्ष्यते । एवं देवतायामपि *इन्द्रमुपासीतेत्यादौ लाके प्रयोगस्यानियमात् गौणतयैव व्यवहाराच्चार्थानध्यवसायेऽलौकिकसहस्राक्षादाविन्द्रादिपदशक्तिग्रहः प्रमाणञ्च* इन्द्रः सहस्राक्ष इत्यादिर्विधिसभभिव्याहमतोऽर्थवाद एव स्वर्गपदवत् । अथ स्वर्गपदे प्रवृत्त्यन्यथानुपपत्त्या *तत्सुखं स्वः पदास्पदमितिश्रुतेश्चार्थवादादेव शक्तिग्रहः न चेह तथार्थवादः किन्तु* इन्द्रः सहस्राक्ष इत्यादि स्तावकत्वेन प्रवृत्तिपरमिति चेत् न इन्द्रः सहस्राक्षइत्यादिप्रसिद्धपदसामानाधिकरण्यश्रुतौ बाधकं विना सहस्राक्षस्यैवेन्द्रादिपदवाच्यत्वावधारणात् प्रसिद्धपदसमन्वबलेन प्रतीयमानमर्थमबाधितमादायैव तेषां प्रवर्तकत्वात् । मन्त्रप्रकाशितशशिशेखराद्युपेतमुद्दिश्य हविस्त्यागेन तत्रैव याज्ञिकानां देवताव्यवहारात् । अपि च *शिवाय गां दद्यादित्यादिना देवतासम्प्रदानत्वश्रुतेः शिवादिसहस्रनाम्नां पर्यायत्वेन श्रुतेर्महाजनपरिग्रहेण प्रमाणत्वादाराधितदेवतायां वरदातृत्वश्रुतेश्च बाधकं विना चेतनैव देवता । अथ देवताचैतन्यपक्षे*

तत्प्रीतिरेव यागव्यापार इति नापूर्वसिद्धिरिति चेत् न प्रीतेः सुखस्य तदनुभवस्य चाशुतरविनाशित्वात् तज्जन्यसंस्कारस्य स्वाविषये फलाहेतुत्वात् फलहेतुस्थायिकृतिव्यापारापेक्षायां लाघवेन कृतिसमानाश्रयस्यैव व्यापारत्वकल्पनात् । नानायागेष्टकदाह्वाने चैकदा सन्निधानं तद्बद्धिविशेष एव प्रतिष्ठाविधिना प्रतिमादावहङ्कारवत् । अथ राजसूयादिफलत्वेन श्रतेरिन्द्रादिश्चेतन एव देवतात्वन्तु तस्य नास्ति मानाभावात् किन्तु देशनादेशिकतचतुर्थ्यन्तपदनिर्द्देश्यत्वं देवतात्वमितीन्द्रायेत्यादिपदमेव देवता अतएवाग्निप्रकाशकमन्त्रेणाग्निप्रकाशनानन्तरं अग्नय इति नियमतो हविसस्त्यागो न पर्यायान्तरेण । न चेन्द्रोद्देशेन हविसस्त्याग इन्द्रनिष्ठकिञ्चिज्जनकः तत्स्वरूपाजनकत्वे सति तदुद्देशेन क्रियमाणत्वात् ब्राह्मणाय दानवदिति वाच्यम् । अप्रयोजकत्वात् तदर्थत्वेन क्रियमाणत्वस्योपाधित्वाच्च । इन्द्राय स्वाहेत्यत्र न तादर्थ्ये चतुर्थी किन्तु स्वाहादिपदयोगे उपपदविभक्तिरेव अन्यथा *नमः-स्वस्ति-स्वाहेत्यादिसूत्रवैयर्थ्यात् । मैवं । चतुर्थ्यन्तपदस्य देवतात्वे मानाभावात् चतुर्थीं विनापि इन्द्रो देवतेति व्यवहारात् । अग्नये कव्यवाहनायेत्यादौ देवताद्वयप्रसङ्गात्* इन्द्रः सहस्राक्ष इत्यर्थवादस्य *इन्द्रमुपासीतेत्यादिविधिसमभिव्याहारेण एकवाक्यतया तस्यैवोपायस्यत्वात्* शिवस्वन्नाददीतेत्यत्र महादेवमुद्दिश्य त्यक्तेऽपि शिष्टानां शिवस्वत्वेन व्यवहाराच्च । अग्नय इति पदेन नियमतस्त्यागश्रुतिबोधितत्वेन तथा त्यागस्य फलहेतुत्वात् । न च बीजाक्षराणां देवतात्वात् तत्रैव शिवादिपदशक्तिग्रह इति वाच्यम् । बीजाक्षराणां चतुर्थ्यन्तत्वानियमात् । तदप्रतीतावपि मन्त्रप्रकाशितशशिशेखराद्युपेतमुद्दिश्य हविस्त्यागेन तत्रैव याज्ञिकानां व्यवहारः बीजाक्षराणां हविस्त्यागभागित्वेनानुद्देश्यत्वात् शिवस्य प्रतिमन्त्रं बीजाक्षराणां नानात्वात् अननुगमेन शिवपदशक्तिग्रहस्याशक्यत्वाच्च । न च मूर्तिभेदेन शिवशरीराणामननुगतत्वेन तवापि न शक्तिग्रह इति वाच्यम् । बाल्यादिना भिन्नशरीरेषु#ु चैत्रत्ववच्छिवत्वजातेदृष्टविशेषोपगृहीतत्वस्य वानुगत्वात् अदृष्टशून्यस्य चेश्वरस्य न देवतात्वं ईशानश्च तद्भिन्न एव तस्मान्मन्त्रकरणकहविस्त्यागभागित्वेनोद्देश्यत्वं देवतात्वं अन्येषां हविःसम्बन्धे मन्त्रस्याहेतुत्वादिति ।

क्वचिच्च वाक्यशेषाच्छक्तिग्रहः यथा यवमयश्चरुर्भवति वाराही चोपानत् वैतसे कटे प्राजापत्यं चरुं चिनोतीत्यत्र यव-वराह-वेतसशब्दाः किं कङ्ग-वायसजम्बूनां वाचकाः उत दीर्घश्रूक-सूकर-वञ्जुलानामिति म्लेच्छार्यव्यवहारदर्शनाद्विप्रतिपत्तौ मुख्यार्थानध्यवसायात् तत्पदे प्रमाण्यानिश्चये व्यवहाराद्व्युत्पत्तिः स चाविशिष्टः पिकादिपदेषु म्लेच्छव्यवहाराद्व्युत्पत्तेः सूकरस्येव चर्मणा काकस्याप्युपानहोः सम्भवादिति पूर्वपक्षे वसन्ते सर्वसस्यानां जायते पत्रशातनं मोदनमानाः प्रदृश्यन्ते यवाः कणिशशलिनः । *वराहं गावोऽनुधावन्ति* । *अम्बुजो वेतसः* । इति वाक्याशेषरूपवेदविरोधिनौ म्लेच्छप्रसिद्धः स्मृतिरिव वेदविरुद्धा हेयेति निरस्तायां म्लेच्छप्रसिद्धौ निष्प्रतिपक्षार्यव्यवहाराच्छक्तिग्रहः । ननु वाक्यशेषात् श्रूकरादिषु तात्पर्यनिश्चयो न शक्तिनिर्णायकः काकादि सदृशतया श्रूकरादौ प्रयोगस्य

गौण्यादिनापि सम्भवादिति चेत् न श्रूकरादौ तात्पर्यवच्छक्तेरपि निश्चयात् । तथा हि यद्यप्यनादिप्रयोगयागिता न शक्तिनियता वैदिकगौण्यादिना व्यभिचारात् तथापि शक्तिरनादिप्रयोगनियता अतो वराहशब्दस्यानादि । प्रयोगयोगिता शक्तिश्च काके कल्प्येति गौरवं श्रूकरत्वेऽनादिवेदसम्बन्धात् प्रयोगोऽनादिसिद्ध एव शक्तिमात्रं कल्प्यत इति लाघवमित्यनादितात्पर्यात् श्रकरे शक्तिरेव । अथ काकवत् श्रूकरोऽप्यसदृश एव सुसदृशस्य गवयादे: सत्त्वात् कथञ्चित् सादृश्यं काकस्याप्यस्तीति चेत् न काक-श्रूकरयोर्वराहशब्दाद् बुद्धिस्थत्वेऽनयो: को वाच्य इति जिज्ञासमानस्य स्मृतिविषय इति तन्निरासादन्यथा तात्पर्यग्राहकवाक्यशेषस्यापि निष्प्रयोजनत्वं स्यात् कथञ्चित् सादृश्यस्य सर्वत्र सत्त्वेन तात्पर्यानध्यवसायादिति । इतरान्विते शक्तिरित्यपि गुडजिह्विका वस्तुतोन्वयेऽपि न शक्ति: । ननु व्यवहारेणानुमिते इतरान्वितज्ञाने पदशक्यत्वग्रहात् तत्रैव शकिं्त गृह्णाति उपस्थितत्वात् । न चाग्रे तत्यागो हेत्वभावात् न तु पदार्थज्ञानमात्रे व्यवहारात् तस्यानुपस्थिते: उपायान्तरात्तदुपस्थित्यन्तरकल्पने मानाभावात् अत इतरान्वितस्वार्थज्ञानशक्तत्वेन ज्ञातपदं स्वार्थान्वयानुभावकं इत्यन्विताभिधानमिति चेत् न इतरान्वितपदार्थज्ञानोपस्थितौ पदार्थज्ञानं विशेष्यमिति तदुपस्थितौ तस्यापि विषयत्वात् विशिष्टज्ञानस्य विशेष्यविषयत्वनियमादिति तत्रैव शकिं्त कल्पयति लाघवात् न त्वन्वयांशेऽपि गौरवात् । अस्तु वा प्रथममितरान्वितज्ञाने शक्तिग्रहेऽग्रे तत्याग: अन्यलभ्यत्वप्रतिसन्धानात् अनन्यलभ्यस्यैव शब्दार्थत्वात् प्रथमगृहीतमात्रञ्च न बलमित्युक्तमेव तस्मात् सर्वै: प्रथमगृहीतमात्रञ्च न बलमित्युक्तमेव तस्मात् सर्वै: प्रथमव्यवहारादुपस्थिते कार्यान्वितज्ञानेऽन्वितज्ञाने वा पदकारणत्वग्रहात्तत्र शक्तिग्रहोऽग्रेऽपि गौरवान्यलभ्यत्वप्रतिसन्धानेऽपि न तत्याग:

पूर्वकल्पनाया विपरीतत्वादिति स्वशिष्यव्यामोहनम् । अथ कार्यत्वस्येतरपदलभ्यत्वेन तथा न त्वेवमन्वये तस्येतरपदाशक्यत्वाच्छक्यत्वे वा अविवादादिति चेत् न घटशक्तत्वेन ज्ञातं पदं स्वार्थस्मरणद्वारा आकाङ्क्षादिसहकारिवशात् समभिव्याहृमतपदार्थेन सह स्वार्थस्यान्वयमनुभावयति स्वभावादित्यन्यथैवान्वयज्ञानलाभात् किं शक्त्#ाय । अन्वयमात्रशक्तावप्यन्वयविशेषज्ञानार्थमाकाङ्क्षादेरवश्यमपेक्षणात् क्रिया-कारकपदयो: प्रत्येकमितरान्वितस्वार्थबोधकत्वे वाक्यर्थद्वयधीप्रसङ्गात् । न चैकमेवान्विताभिधायकमितरत्तु प्रतियोगिस्मारकमिति वाच्यम् । अविशेषादशक्यान्वयानुभवेऽतिप्रसङ्गात् । अन्वयेऽपि शक्तिरिति चेत् न अशक्यमपि हि शक्यान्वयं बोधयति नान्यत् शक्यान्वयत्वस्य स्वरूपतोनियामकत्वात् अन्यथा तवाप्यप्रतीकारात् । नन्वेवं पदानामन्वितज्ञानजनकत्वात् तत्र शक्तिरस्त्येव अशक्तस्याजनकत्वात् तवापि पदादन्वयबोध इतीश्वरेच्छासत्त्वादिति सत्यं किन्तु अन्वयबोधे स्वरूपसती सा व्याप्तियते न तु ज्ञाता घटज्ञानशक्तत्वेन ज्ञानादेव घटान्वयबोधोपपत्ते: यथा तव जातिशक्तपदस्य आत्मव्यक्तिज्ञाने दृष्टञ्च ज्ञातकरणे सामान्यसम्बन्धितया ज्ञातस्यापि विशेषबुद्ध्युपायत्वं यथा वह्निसामान्यव्याप्ततया गृहीतधूमस्य वह्निविशेषबुद्धिजनकत्वम् । अथ घटज्ञानत्वं इतरान्वितघटज्ञानेऽप्यस्तीति तेन रूपेणान्वितघटज्ञानेऽपि ज्ञाता शक्तिव्र्याप्रियत इति चेत् सत्यं किन्तु घटज्ञानत्वं शक्यतावच्छेकं न त्वन्वितघटज्ञानत्वं गौरवात् अन्यलभ्यत्वाच्च । एवञ्च जातिवाचकपदस्य व्यक्ताविव एकैव शक्तिरन्वयांशे स्वरूपसती पदार्थांशे ज्ञाता व्याप्तियते । जाति-व्यक्त्#ोय: समानसंवित्संवेद्यत्वात् तथा घटज्ञानादिकन्तु नान्वयविषयतानियतं स्मरणे व्यभिचारादिति चेत् घटानुभवविशेषं प्रति घटपदत्वेन कारणता स च शब्दानुभवोऽन्वयविषयतानियत एव केललस्य शब्देनाननुभवात् स्मरणञ्च प्रति पदत्वेन न जनकता व्यभिचारात् किन्तु सम्बन्धितया ज्ञातत्वेन । स्यादेतत् अन्वयतात्पर्यकतया तत्प्रतिपादकं पदमित्यविवादं तात्पर्यनिर्वाहिका च वृत्ति: सा चेह न गौणी न वा लक्षणेति शक्तिसिद्धि: । अथान्वये लक्षणैव स्वार्थसम्बन्धिनि तात्पर्यात् पदार्थोपस्थित्यनन्तरं तदन्वयोपपत्तेश्च । न च वृत्तिद्वयस्य विरोध: अन्वयविशेषणतया पदार्थोपस्थिते:। न च लाक्षणिकानामननुभावकत्वादन्वयानुभव: कथमिति वाच्यम् । पदार्थस्य स्मरणादन्वये शक्तत्वाच्च पदानां शक्त्#ायननुभावकतया सर्वत्र लाक्षणिकस्यैवानुभावकत्वदिति । तन्न । वृत्तिर्हि ज्ञतोपयुज्यते न स्वरूपसत्यतिप्रसङ्गात् । न चेह स्वार्थसम्बन्धितयाऽन्वय: प्रागवगत: वाक्यार्थस्यापूर्वत्वात् । किञ्च शक्यसम्बन्धितया अन्वये लक्षणार्थ पदार्थे शक्तिकल्पनं तद्वरं लाघवादन्वयेऽपि शक्तिरस्तु किं वृत्तिद्वयकल्पना एवं स्थिते प्रयोगेऽपि अन्वय: पदशक्य: वृत्त्यत्यन्तरं विना पदप्रतिपाद्यत्वात् पदार्थवदिति । उच्यते । वृतिं्त विनापि तात्पर्यनिर्वाहात् किं वृत्त्या पदानामुक्तक्रमेणान्वयबोधजनकत्वसम्भवादन्यथा शक्त्#ाय तात्पर्यनिर्वाहोदृष्ट इति लक्षणोच्छेद: । अथ शकिं्त विनापिशक्यसम्बन्धात् तन्निर्वाह इति न तत्र शक्ति: तर्हि वृतिं्त विनापि तन्निर्वाह इति किं वृत्त्या । अतएवानुमानमप्रयोजकं अन्यथा पदप्रतिपाद्यत्वादेव शक्तिसाधने वृत्त्यन्तरोच्छेद: । अतएव धूमोऽस्तीत्यत्र धूमपदस्य वह्निबोधपरत्वेऽपि वह्नौ न लक्षणा शक्त्#ाय धूमोपस्थितौ अनुमानद्वारा तत्प्रतीतिसम्भवात् । तथा गच्छ गच्छति चेत् कान्त पन्थान: सन्तु ते शिवा: । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् इति । वाक्यस्य मा गच्छेत्यत्र तात्पर्येऽपि न लक्षणा गमनस्य प्रियामरणहेतुत्वं हि वाक्यार्थ: तेन गमनं मया न कर्तव्यं प्रियामरणहेतुत्वादित्यनुमानादेव गमने अकर्तव्यताबोधनेन तात्पर्यनिर्वाहात् । यत्र हि मुख्यया साक्षात् परम्परया वा न तात्पर्यनिर्वाह: तत्र लक्षणा । ननु घटमानयेत्यत्र प्रत्येकमन्वयविशेषे जिज्ञासा भवति। न च सामान्यानवगमे विशेषे स स्यात् इत्यन्वयसामान्ये शक्तिरेवेति चेत् न कारणेन कियाया च क्रियाकारकसामान्याक्षेपात्तदुपपत्ते: दृष्टे फलादौ रसविशेषजिज्ञासावत् । एतेन यदुक्तमन्वितपदार्थे मम त्वकैक शक्तिस्तव त्वेका पदार्थेऽपरा त्वन्वय इति निरस्तम् । अन्वये शक्त्यभावात् । न चैवमन्ययानुभवे पदविनियोगो न स्यादिति वाच्यम् । अन्वयानुभवार्थमेव पदार्थे पदानां शक्तिकल्पनात् । तस्मात् पदं करणं पदार्थस्मरणं व्यापार: आकाङ्क्षादिसहकारिवशात् स्मारितार्थान्वयानुभव: फलं पदार्थस्मरणं न व्यधायकं व्यापरत्वात् । न च स्मरणद्वारा पदार्थ एव

कारणं तस्यानागतत्वादिना स्वस्मरणे अन्वयानभवे चानकत्वात् । तथपि पदार्थस्मरणमेव करणमस्तु आवशयकत्वात् अतएव चिन्तावशोपनीतपदार्थानामन्वयबोधनात् काव्यादिरिति चेत् न स्मरणस्य निव्र्यारत्वेनाकरणत्वात् अनन्यथासिद्धान्वय-व्यतिरेकाभ्यां आकाङ्क्षादिमत्पदस्यान्वयानुभवविशेषे कारणत्वात् पदार्थोपस्थिते: संसर्गधीमात्रहेतुत्वेऽपि शाब्दसंसर्गधीविषये पदस्यैव हेतुत्वात् गौ:

कर्मत्वमानयनमित्यत्र पदार्थज्ञानेऽपि अन्वयज्ञानानुदयात् पदविशेषोपस्थितपदार्थज्ञानस्य हेतुत्वे पदविशेषस्यैवावश्यकत्वेन हेतुत्वाच्च । काव्यस्थले च

पदार्थज्ञानव्यापारकं उत्प्रक्षादिसहकृतं मन एवान्वयानुभवकरणम् । न चैव उत्प्रेक्षयाः प्रथक् प्रमाणत्वं व्यभिचारिजातीयतया लिङ्गादाविव प्रमाकरणतावच्छेदकानतिप्रसक्तानुगतरूपाभावान्निर्व्यापारत्वाच्च किन्तु प्रमाणसहकारिणी सा । #ृअतएव मानसे लिङ्गपरामर्शे व्याप्तिस्मृत्यादि न पृथक् प्रमाणम् । अथ पदमन्तरेणापि योग्यतादिज्ञानेऽन्वयबोधो भवत्यतः पदार्थस्मरण एव पदानामुपक्षयः । तदुक्तं पश्यतः श्वेतमा रूपं हेषाब्दञ्च श्रृण्वतः । खुरविक्षेपशब्दञ्च श्वेतोऽश्वेधावतीति धीः । इति चेत् सत्यं प्रयोजकवाक्योच्चारणानन्तरं प्रयोज्यव्यापारदर्शनात् अन्वितज्ञानोपपत्त्यर्थं पदस्यैव शक्तिः कल्प्यते प्रथमस्तस्यैव कारणत्वावधारणात् । पदार्थेषु शक्त्यन्तरकल्पने गौरवात् तदाहुः प्राथभ्यादिभिधातृत्वात्तात्पर्योपगमादपि । पदानामेव सा शक्तिर्वरमभ्युपगम्यता । इति श्वेतोऽश्वेधावतीति धीश्च लिङ्गजा पदस्य क्लृप्तकारणभावस्याभावादिति ।

# जातिशक्तिवादः

एवं पदार्थमात्रे शक्तौ पदार्थोनिरूप्यते । तत्र प्रभाकराः । यद्यप्यानयनादिव्यवहाराद्व्यक्तावेव शक्तिरुचिता । तथाप्यानन्त्य-व्यभिचाराभ्यां तत्र न शक्तिग्रहः समुच्चयेन शक्यत्वे गां दद्यादित्यादौ सर्वोपादानासामर्थ्यं एकस्य शक्यत्वेऽनध्यवसायः । न च गोव्यक्तिमात्रमर्थः मात्रशब्दस्य सर्वार्थत्वे उक्तदोषात् सामान्यार्थकत्वे व्यक्तेरप्रतीतेः नानार्थत्वे च सर्वासां प्रत्येकं ज्ञातुमशक्यं शक्तौ शक्ये च गौरवं अपूर्वगवि व्यवहाराभावाच्च। नापि गोत्वेनोपलक्षिता व्यक्तिः शक्या धेनुपदवदतो न शक्यानन्तरं न व्यभिचारः न सर्वासङ्ग्रहः न नानार्थत्वं गोत्वेन तासामैक्यादिति वाच्यम् । रूपान्तरेण विज्ञातमन्येन रूपेण हि उपलक्ष्यते यथा काकेन गृहविशेषोगोत्वेन धान कर्मव्यक्तिविशेषः स्वतोविलक्षणः न तु काकाद्याकारेणैव तत्प्रतीतिः । न च व्यक्तीनां जातिं विना रूपान्तरमेकमस्ति ज्ञायते वा गोपदाद् गौरित्येव प्रतीतेः गोत्वविशिष्टे च कार्यान्वयाद्गोत्वं विशेषणं नोपलक्षणं तदन्येन कार्यान्वये उपलक्षणं यथायं वासस्वी देवदत्तशब्दवाच्य इत्यत्र वासः । न च गोत्वैकत्वेन व्यक्तीनामैक्यं क्रियते अशक्यत्वात् । नापि ज्ञाप्यते असत्त्वात् । न च तदेकत्वमेव व्यक्तेरेकत्वं असम्भवात् । नापि व्यक्तिः शक्या गोत्वमवच्छेदकं कारणत्वे दण्डवत् एवं हि गोपदात् न गोत्वविशिष्टबुद्धिः स्यात् शक्तिग्रहाहितसंस्कारसचिवाद्गोपदादेव धेनुपदाविव गोत्वविशिष्टज्ञानं तदुद्बोधश्च तद्वदेव परम्परासम्बन्धादिति चेत् न तत्र हि धानकर्मव्यक्तिविशेषस्यावश्यशक्यत्वेऽनुगमाय गोत्वमवच्छेदकमात्रं न तु वैषरीत्य गोत्वस्य वृषभेऽपि सत्त्वात् इह तु व्यक्तिरतिप्रसक्तेरि#ीति जातिविशिष्टैव सा शक्या स्यात् । वस्तुतस्तु जातेः शक्योपलक्षणत्वे शक्यवच्छेदकत्वे वावश्यकत्वात् लाघवाच्च जातिरेव शक्या स्यात् न तु व्यक्तिः धेनुपदे तु गोत्वं न तथा अतिप्रसङ्गात् । अस्तु तर्हि जातिविशिष्टं शक्यं स्वव्यवहारेण च स्वहेतुतया जातिविशिष्टज्ञानस्यानुमितत्वादिति चेत् न विशेष्यभेदाद्विशिष्टानामन्तत्वेन व्यक्तिवाच्यत्वे उक्तदोषग्रासात् । विशेषणस्यैक्यैक्येन विशिष्टनामैक्यस्योपलक्षपक्षवद्दुष्यत्वात् तस्माद्व्यक्तेरपदार्थत्वे जातिरेव पदार्थः । वस्तुतस्तु व्यक्तौ जातिरनुगमिका विशेषिका चावश्यं वाच्येति नागृहीतविशेषणान्यायेन सैव वाच्या । अथ जातावपि व्यक्तिरेव विशेषः धर्मान्तराभावात् गवेतरावृत्तित्वे सति सकलगोवृत्तित्वादेरूपाधेरपि व्यक्तिघटितत्वात् नागृहीतविशेषणान्यायोव्यक्तावपीत्युभयमपि वाच्यमिति न जातेः स्वत एव व्यावृत्तत्वात् । अन्यथा जाति-व्यक्तोर्व्यावृत्ततत्वज्ञानादन्योन्यव्यावृत्ततत्वबुद्धावन्योन्याश्रयः । स्वतोव्यावृत्ततत्वञ्च न स्वयमेव स्वव्यावर्तकत्वं स्वस्मिन् स्वावृत्तेः । नापि व्यावर्तकं विनैव व्यावृत्ततत्वं असम्भवात् । किन्तु स्वाश्रयवत्स्वात्मनि व्यावृत्तधीजनकस्वभावत्वं परेषामन्त्यविशेषवत् । व्यावर्तकधर्मेऽपि धर्मान्तरादेव व्यावृत्तबुद्धावनवस्था स्यादतएव किञ्चिद्धि वस्तु स्वत एव विलक्षणमित्याहुः ।

अस्तु वा व्यक्त#ाय व्यावृत्ततया बोधिता जातिरेव पदार्थोलाघवात् न तु वैपरीत्यमुभयं वा गौरवात् कुतस्तर्हि व्यक्तिधीः जातिशक्तादेव कथमन्यशक्तादन्यधीः स्वभावात् तत्स्वभावत्वमेव व्यक्तिशकिं्त विना न निर्वहतीति चेत् न गोपदं हि नियमतोजातिव्यक्ती बोधयति तत्रास्य जातिशक्तिधीरेव सहकारिणी कल्प्यते #ैलाघवादावश्यकत्वाच्च न तु व्यक्तिशक्तिधीरपि गौरवात् । जातिशक्तिज्ञाने सति तां विना व्यक्तिबोधे विलम्बाभावात् यथा तव पदार्थशक्तादेवान्वयधीः । यद्वा जातिशक्तमेव पदं व्यकिं्त बोधयति अशक्यत्वेऽपि जात्याश्रयत्वमेव नियामकं यथा अशक्यमपि स्वार्थान्तरं बोधयति । तत्र प्रयोजकत्वेन क्लृप्ता शक्तिरेवास्तु जात्याश्रयत्वस्य तथात्वकल्पने गौरवादिति चेत् न अन्यलभ्यस्यापदार्थत्वादन्यथा अन्वयोऽपि शक्यः स्यात् लक्षणाद्युच्छेदश्च । अथ वा जातिशक्तिज्ञानाज्जातिधीर्भवन्ती व्यक्तिमपि गोचरयति । व्यकिं्त

विना जातेरभावात् यो येन विना न भासते तद्धीहेतुस्तमवबोधयति यथा ज्ञानधीहेतुस्तद्विषयं यथा वा तवाधिकरणसिद्धान्तो ज्ञानादिनित्यत्वं अन्यथा पदं जातिमपि न बोधयेत् केवलायाअप्रतीतेः तथा च जातिशक्तिकल्पनावैत्यर्थं तस्मात् जातिज्ञानार्थं क्लृप्ता शक्तिर्व्यक्तिमपि बोधयति एकवित्तिवेद्यत्वनियमात् । एतेनैकवित्तिवेद्यतैव व्यक्तिशकिं्त विना न स्यात् ज्ञापकाभावात् । न हि व्यक्तिज्ञानमहेतुकं जातिहेतुकं वा सदातनत्वप्रसङ्गात् । नापि जातिधीहेतुकं संविद्भेदापत्तेरिति निरस्तम् । जातिशक्तेरेव व्यक्तिज्ञापकत्वात् । ननु जातिं विना प्रत्यक्षादिना व्यक्तिज्ञानादन्यैव व्यक्तिधीसामग्री जातिविशिष्टज्ञानञ्चोभयज्ञापकसामग्रीद्वयसमाजादार्थं । अतएव व्यकिं्त विना जातेस्मरणेन जातिस्मरणस्य व्यक्तिविषयत्वनियमात् जातिज्ञापकमात्रमेव व्यक्तिज्ञापकं कल्प्यते सामान्यकल्पनायां बाधकाभावादिति परास्तम् । जातिं विनापि व्यक्तिस्मरणात्तत्रान्यैव सामग्री चातिविशिष्टस्मरणञ्चोभयांशस्मारकसमाजादिति । अत्र ब्रूमः । जाति-व्यक्तिप्रत्यक्षादिबोधे तथैव सामग्रीद्वयस्य पृथगन्वय-व्यतिरेकग्रहाच्छाब्दे तु व्यक्तिबोधे जातिशक्तिज्ञानमेव हेतुर्लाघवात् न सामग्र्यन्तरं तत्सत्त्वे तेन विना विलम्बाभावात् । एवञ्च जातिशक्तत्वेन ज्ञातं पदं जातिविशिष्टस्य स्मारकमनुभावकञ्च । ननु ज्ञाने शक्तिः शक्यत्वात्

तथाच यस्य ज्ञाने शक्तिस्तच्छक्यं जाति-व्यक्तिज्ञाने च शक्तिरिति जातिवद्व्यक्तिरपि शक्येति चेत् न यद्विषयतया हि ज्ञाता ज्ञाने शक्तिरुपयुज्यते तत् शक्तिज्ञाने विषयतया शक्यतावच्छेदकं शक्यं जातिज्ञानञ्च तथेति जातिरेव शक्या न तु व्यक्तिज्ञानत्वमप्यच्छेदकं गौरवात् । न च शक्यज्ञाने नियतविषयत्वमेव शक्यत्वं व्यवहारानुमित शक्यानुभवविषयाणामन्वये तत्सम्बन्धिमिति-मातृणामपि शक्यतापत्ते: एवञ्च जाति-व्यक्तिज्ञानजनककत्वादुभयत्रापि शब्दशक्ति: । जात्यंशे स ज्ञाता व्यक्त्यंशे स्वरूपसतो हेतुर्लाघवादिति कुब्जशक्तिवाद: । एवञ्च सैव तदैव तेनैव ज्ञाता अज्ञाता च वाचिका अवाचिकावेत्यत्र जातिव्यक्यवच्छेदकभेदेनाविरोध: त्वयाप्यन्वये कुब्जशक्तिस्वीकारात् । व्यक्ते: शक्यत्वेऽपि ज्ञातशक्तिशब्दजनितज्ञानविषयत्वलक्षणं वाच्यत्वं नास्ति । न चैवं परिभाषा शब्दजन्यज्ञानविषयत्वेन वाच्यत्वे लाक्षणिकादेरपि वाच्यत्वापत्ते: व्यक्ते: शक्यत्वेऽपि व्यक्तिशक्तिज्ञानं न कारणं व्यक्तिशक्तिज्ञानत्वं नावच्छेदकमिति लाघवम् ।

यत्तु तच्छक्तत्वेन ज्ञातादेव तदर्थबोध: शक्तिभ्रमादपि धीदर्शनात् । तथा योग्यताद्यन्वयानुपपत्ती विना पदादुपस्थिति: शक्तिसाध्येति व्यक्तिरपि शक्येति । तन्न । अन्यलभ्ये शक्तेरकल्पनात् अन्यथा तवान्वयेऽपि शक्तिर्लक्षणाद्युच्छेदश्च । ननु न जातिरर्थ:; व्यवहाराभावेन व्युत्पत्तेरसिद्धे: कारकोपरक्तक्रिया हि व्यवहारगोचर: जतिश्च न क्रिया नित्यत्वात् कारकं न कत्रादि क्रियायास्तत्रासमवायात् परसमवेतक्रियाफलभागित्वाभावात् कर्तृत्वव्यापारानाश्रयत्वात् अचेतनत्वात् तया सह विभागाभावात् क्रियानाधारत्वाच्चेति चेत् न व्यक्तिव्यवहारादेव उक्तन्यायेन जातौ शक्तिग्रहात् जातिसविकल्पकाद्यव्यावृत्ततया ज्ञातायां व्यक्तौ क्रियान्वय: सविकल्पकञ्चालोचनद्वारा जातिजन्यमिति परम्परया जातेरपि कारकत्वेनान्वय: । यद्वा न केवलव्यक्ते: कारकत्वं न हि गौर्गच्छतीत्यत्र व्यक्तिमात्रं यातीति कस्यचित्प्रतीति: किन्तु जातिविशिष्टाया: तथाचोभयमपि कारकम् ।

श्रीकरस्तु केवलजाति-व्यक्त#ोयरकारत्वात् क्रियान्वयोव्यक्तेराश्रयतया जातेरवच्छेदकतया आरुण्यादिवत् एवञ्च जातिशक्तपदात् जातेरनुभव: शाब्दोव्यक्तेरौपादानिक: अशक्यत्वादिति ।

अन्ये तु जातिशक्तमेव पदं-जाति-व्यक्त#ोय: स्मारकमनुभावकञ्चेति व्यक्तेरपि शाब्दत्वम् । न च वृतिं्त विना अन्वयानुभवेऽप्रवेशान्न व्यक्ते: शाब्दत्वं वृतिं्त विनापि एकवित्तिवेद्यत्वनियमेन जातिशक्तादेव व्यक्तेरनुभावात् अन्यथा जात्यन्वयोऽपि न स्यात् व्यकिं्त विना जातेरननुभवात् । अतएव जातिशक्तिरेव व्यकिं्त बोधयतीति गुरव: । किञ्च शक्योपस्थापितस्यान्वयानुभवं प्रति पदानां कारणत्वं अतो जातिवदुपस्थापिताया व्यक्तेरनुभव: पदात् न तु तत्तच्छक्त#ोयपस्थापितस्य गौरवात् । न चैवमशक्यपरत्वे लक्षणा यथा ह्रन्यत एव ज्ञानान्न शक्तिस्तथा लक्षणापि न तत् किमशक्येऽपि मुख्य: प्रयोग:: सत्यं शक्त#ाय साक्षादुपस्थित एव तस्य मुख्यत्वात्स्वशक्त#ेयति त्वधिकम् । वस्तुतस्तु जातिशक्तादेव व्यक्तिधीसम्भवान्न व्यक्तौ शक्ति: । यदि च ततो न तद्धीस्तदा तत्र शक्तिरेव स्यात् अन्यथा तद्धीर्न स्यादेव । ननु पद-जातिभ्यामप्येकोजाति-व्यक्त्यनुभव: क्रियते तत्र जात्यंशे पदस्य व्यक्त्यंशे जातेरनुभावकत्वमयमेव उपादानार्थं इति चेत् तर्हि जाते: कारणत्वापेक्षया शक्तिज्ञाने उपस्थितव्यक्तेरवच्छेदकत्वमात्रकल्पनैव लघीयसी जाते: प्रमाणान्तरत्वापातश्च । अतएव ब्रीहीनवहन्तीत्यत्र व्यक्तौ न लक्षणा तत्साध्योपस्थितेर्जातिशक्तित एव सिद्धे:; । अस्तु वा गवावच्छेदकत्वेनारुण्यादिवद्व्रीहित्वेऽप्यवघातान्वय इति । अत्रोच्यते । गोत्वज्ञाने गोज्ञाने वा शक्तं पदमित्याकार: । शक्तिग्रह: तथाच शक्यज्ञाने

विषयतया जातेरवच्छेदकत्वं व्यक्तिमादायैव प्रतीयते न केवलाया: व्यकिं्त विना जातेरप्रतीते: तथाच जातेरवच्छेदकत्वे नागृहीतविशेषणान्यायेन व्यक्तेरवच्छेदकत्वं वज्रलेपायितमिति शक्तिज्ञाने विषयतया अवच्छेदकत्वात् जातिवत्सापि शक्या तस्मात् परिहरैकवित्तिवेद्यत्वनियमं स्वीकुरु वा व्यक्तेर्वाच्यत्वम् । अपि च यद्धर्मवत्तया ज्ञात एव यत्र यस्य ज्ञानं स तत्रावच्छेदक: व्यक्तिज्ञाननत्वेन ज्ञात एव तत्र ज्ञाने शक्तिधीरिति व्यक्तिरपि शक्या । नन्वाद्यवुत्पत्तौ मिति-मातृविषयत्वेन ज्ञात एव ज्ञाने प्रवर्तकत्वं ज्ञातं न च तयोज्र्ञानं प्रवर्तकमतो व्यभिचार: अन्यथा प्रवर्तकत्वेन मिति-मातृज्ञानमपि प्रयोज्यस्यानुमाय बालस्तत्रापि शकिं्त गृह्णीयात् एवं तवापि कार्यान्वितज्ञान एव शक्ति: स्यात् तत्त्वेन ज्ञात एव ज्ञाने शक्तिग्रहादिति चेत् मिति-मातृज्ञानत्वं कार्यान्वितज्ञानत्वञ्च विनापि प्रवर्तकज्ञाने घटज्ञानत्वादिकं ज्ञातुं शक्यमिति तयोर्नावच्छेदकत्वं किन्तु घटज्ञानत्वादिकमेव लाघवात् तयोरपि तत एव प्राप्तेश्च । किञ्च पदं व्यक्तिज्ञानार्थं शक्यज्ञाने विषयतया व्यक्तेरवच्छेदकत्वमात्रं कल्पयति लाघवात् जातिविषयत्ववद्व्यक्तिविषयत्वस्य ज्ञानवित्तिवेद्यत्वेनावश्यं शीघ्रोपस्थिततत्वात् न तु जातिशक्तिस्तद्बोधे कारणान्तरं वा तदवच्छेदकं गौरवाच्छक्तिग्रहककाले कल्पनीयोपस्थितिकत्वाच्च ।

अन्ये तु प्रथमं व्यवहारानुमितव्यक्तिज्ञाने शब्दानुविधानात् पदं शक्तमित्यवधारयति न तु जातिज्ञाने व्यवहाराजनकत्वे न तदा तस्यानुपस्थिते: पश्चाद्व्यक्तेव्र्यावृत्त्यर्थं अनुगमार्थञ्च जातिरपि तद्विषय इति मानान्तरेण ज्ञात्वा जातिज्ञानेऽपि तत्पदस्य कारणतां प्रत्येति तथाच व्यक्तिशक्तिज्ञानमपि कारणं न तु जातिशक्तिज्ञानेनान्यथासिद्धि: व्यक्तिज्ञानकारणतां उपजीव्य जातिज्ञाने कारणताग्रह इत्युपजीव्यविरोधात् । एतेन जातिरपि शक्या लाघवात् शक्तिग्रहजन्यसंस्कारस्य व्यक्तिविषयत्वनियमेन पदात् जातिस्मरणमुत्पाद्यमानमवश्यं व्यक्तिविषयं संस्कारस्यानियतोद्बोकधत्वेऽपि जात्यंशोद्बोधकादेव व्यक्तंशोद्बोधनियमकल्पना यथा पदेनोद्बुद्धसंस्कारादेव नियता शक्तिस्मृति: पदं विनापि स सर्वा जातिस्मृतिव्र्यक्तिविषया अन्यथा केवलजातिमात्रस्मरणापत्ते: । संस्कारसहितात् पदादेव जातिविशिष्टानुभवोऽपीन्द्रियदिव प्रत्यभिज्ञा । अत एव भाष्यं संस्कार-शब्दशक्तिभ्यां विशिष्टानुभवइत्युन्नीतमतमपास्त उक्तन्यायैर्जातिवद्व्यक्तेरपि शक्यत्वात् विशिष्टनामानन्त्येऽपि एकत्र विशिष्टे तत्त्वं विहाय

गोत्वमादाय गोत्वविशिष्टं शक्यमित शक्तिग्रहः यथा च क्वचिदेव धूमे धूमोवह्निव्याप्य इति बुद्धिः यथा व तथैव कार्याणामानन्त्येऽपि क्वचित् कार्ये तत्त्वं तटस्थीकृत्य कृतिमादाय धर्मिणि कार्यं शक्यमिति लिङादेरपूर्वं शक्तिग्रहः अवच्छेदकैक्याच्छक्तेरेकत्वं तद्वदेव यथा वा व्यक्तिवाचकपश्र्वादिपदानां अथ वा गोत्वेन सामान्यलक्षणया ज्ञाते सर्वत्र गवि गोत्वमादाय शक्तिग्रहः प्रमेयत्वेन च सर्वज्ञाने सार्वज्ञमिष्यत एव नेष्यते तु घटत्वादि सर्वप्रकारकज्ञानवत्त्वेन सर्वैकोदसीनगोः शक्यत्वाद् यत्किञ्चिदेकोपादानेऽनध्यवसायो वा । अन्यथा तवाप्येकवित्तिवेद्यतया सर्वैकपरत्वे उक्तदोषे का गतिः का वा गतिर्व्यक्तिवाचकपश्र्वादिपदानां । भट्टमते तु जातिरेव शक्या लाघवात् व्यक्तिस्त्वाक्षेपलभ्या । ननु नाक्षेप एकवित्तिवेद्यत्वात्तयोः समानानां हि भावः सामान्यं तच्च व्यकिं्त विना न भासते इति चेत् न स्वरूपेण शक्या जातिः न च सामान्यत्वं तस्याः स्वरूपं तद्धर्मत्वात् अन्यथा आलोचनेऽपि सा न भासेत । कथं सामान्यत्वेनाप्रतीता जातिर्व्यक्तितोभिन्नतया शब्दनाभिधातव्येति चेत् न शब्देन व्यक्तितो भिन्नतया जातेरबोधनात् । ननु व्यावृत्ता जातिव्याच्या व्यावृत्तबुदिं्ध विना व्यक्तिविशेषानाक्षेपात् व्यावर्तिका तत्र व्यक्तिरेव अनुगतत्वमप्यनुगम्यमानं विना न भासत इति जातिवित्तिवेद्यैव व्यक्तिरिति चेत् न स्वतोव्यावृत्तजातिस्वरूपस्य वाच्यत्वात् । व्यक्तेर्धर्मान्तरस्य वा व्यावर्तकत्वेऽन्योन्याश्रयोऽनवस्था वा । ननु गौरितिपदात् जाति-व्यक्त्योर्युगपत्प्रतीतिः । न च सूक्ष्मकालभेदाग्रहात् सा भ्रान्ता बाधकाभावात् तथाच गोपदाद्गोत्वधीस्ततः क्रमेण व्याप्ति-पक्षधर्मताज्ञानं ततो व्यक्त्यनुमितिरिति ज्ञानपरम्परकल्पनाद्वरं जातिवित्तिवेद्यत्वं व्यक्तेरिति चेत् न व्युत्पत्त्यधीनं हि शब्दस्य बोधकत्वं अतो व्युत्पत्तिपर्यालोचनया युगपज्ज्ञानमसिद्धम् । अतएव ज्ञानपरम्पराकल्पनमपि युक्तं अन्यथा कर्तुरप्याक्षेपोन स्यात् शब्दात् सकर्तृ

काया एव क्रियाया अवगमात् । न च जातिज्ञानत्वेन व्यक्तिविषयतानियमः प्रत्यक्षादौ तस्य व्यक्तिधीहेतुसमाजाधीनत्वात् । अतएव न जातिधीहेतौ व्यक्तिधीहेतुसहकारितानियमः समाजस्यार्थसिद्धत्वात् गोत्वं गवाविषयप्रतीतिविषयः जातित्वात् गोभिन्नभावत्वाद्वेति जातिमात्रधीसिद्धेश्र्च । अथ यत् तत्परतन्त्रं तत् तेनैकावित्तिवेद्यं यथार्थपरतन्त्रं ज्ञानमर्थेन जातिश्र्च परतन्त्रेति व्यक्तौ भासमानायामेव भासत इति चेत् न परतन्त्रत्वं हि न परसमवेतत्वं गन्धादिना व्यभिचारात् न तद्धीनिरूप्यत्वं असिद्धेः नापि तस्मिन् भासमान एव भासमानत्वं साध्याविशेषात् नापि विशेषणत्वेनैव ज्ञानं गौरित्येव

प्रतीतेः । गवि गोत्वमिति कश्र्चित् प्रत्येतीति चेत् न आलोचने विशेषणत्वं विनापि स्वरूपतः प्रतीतेः जातिमात्रशक्तात् पदात् जातेः स्मरणमालोचनमेव जातिविशिष्टगोचरसंस्कारादेव पदेन जात्यंशोद्बोधे सति जातिमात्रस्मरणात् । अतएव ततो जातिं विनापि कदाचित् व्यक्तिस्मृतिः । अस्तु वा गुरोरिवालोचनमप्पि संस्कारजनकं शब्दव्युत्पत्तिबलेन जातिमात्रस्मरणसिद्धेः । न च स्मरणस्य विशिष्टज्ञानत्वमेव अनुभवस्यापि तथात्वेन निर्विकल्पकासिद्धिप्रसङ्गात् एववित्तवेद्यत्वेऽपि प्रथमदर्शनवत् शब्दादुगोत्वस्मरणमालोचनमेव गोत्वे गोव्यक्तिवृत्तित्वादि वैशिष्ट¬स्याशक्यत्वेन तदविषयत्वात् । न चालोचनस्येन्द्रियजन्यत्वात् न स्मृतित्वं ज्ञानत्वसाक्षाद्व्याप्यधर्मत्वेन स्मृतित्वस्यालोचनवृत्तित्वात् । नन्वाक्षेपाद्व्यक्तिधीर्न व्यक्तित्वेन न वा रूपान्तरेण गौरित्येव प्रतीतेः नापि गोत्वेन गोत्वस्य गोत्वविशिष्टभेदेनाक्षेपाभावादिति चेत् न विशेषण-विशेष्ययोर्भेदेनानुमानाविरोधात् । अतएव गोत्वं व्यक्त्#ायश्रितं जातित्वादिति पक्षधर्मताबलात् गोत्वाश्रव्यक्तिसिद्धिः अर्थापत्तेर्वा तत्सिद्धिः । ननु व्यक्त्#ाय विना किमनुपपन्नं व्यकिं्त विनापि गोत्वस्य तद्बुद्धेश्र्च सिद्धेः कथमर्थापत्तिरिति चेत् न व्यापकं विना व्याप्यस्यासिद्धेः उच्यते। गामनयेत्यतो गोत्वविशिष्टस्य क्रियान्वयबोधाद्गौरित्याकारकगोविशेष्यकबुद्धिः कारणं सा च न शब्दं विना आक्षेपाद्व्यक्त्#ायश्रितं गोत्वमिति धीर्न तु गौरिति । न चैवं व्यक्तेः क्रियान्वयोऽपि गोत्वाश्रिततया निराकङ्क्षत्वात् राजपुरुषमानयेत्यत्रेव राज्ञः अन्वये वा व्यक्तिमानयेति धीः स्यात् न तु गामिति । किञ्च गोत्वं न व्यक्तिव्याप्यं न हि यत्र यदा वा गोत्वं तत्र तदा व्यक्तिर्यत् सामान्यं सा व्यक्तिरिति वा नियमः व्यभिचारात् । नापि गोत्वं गवाश्रितं गोत्वादित्यनुमितिः व्याप्तिग्रहशरीरत्वात् । न च जातित्वं व्यक्त्#ायश्रितत्वे लिङ्गं जातित्वस्य पदादनुपस्थितेः तथात्वे वा जातिवित्तिवेद्यैव व्यक्तिः । अपि च लिङ्गं व्याप्यमनुपपन्नं स्वाश्रये व्यापकपपादकञ्च बोधयति । न चेह गोत्वाश्रये व्यक्तिबुद्धिः । वयन्तु ब्रूमः व्यक्तेरपदार्थत्वे विभक्त्यर्थसङ्ख्या-कर्मत्वादेर्व्यक्तावनन्वयः स्यात् सुविभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधकत्वस्य व्युत्पत्तिसिद्धत्वात् प्रकृतितात्पर्यविषये तदन्वयव्युत्पत्तौ लक्षणोच्छेदो गौरवञ्च । आख्यातार्थसङ्ख्यापि नानुमितेनान्वेति किन्तु भावनान्वयिना शुद्धेन प्रथमान्तादुपस्थितेन पदान्तरादुपस्थितिरेव तत्राक्षेपार्थः । अतएव न व्यक्तेराक्षेपः किन्तु लक्षणया गोपदाद्गौरिति व्यक्तिधीरिति मण्डनः । यदाह *जातावस्तित्व-नास्तित्वे न हि विशेषणे* इति । उच्यते । स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा तीरत्वेन ज्ञाते गङ्गापदस्येव । न चेह गोत्वादन्येन रूपेण व्यक्तेरुपस्थितिः किन्तु गोत्वे नैव व्यक्तित्वेन सास्नादिमत्त्वेन चोपलक्ष्यत्वे गोपदाद्व्यक्तित्वादिरूपेण धीः स्यान्न तु गौरिति । नापि गोत्वसम्बन्धिनि गोत्वविशिष्टे लक्षणा गोत्वे हि न साक्षादानयनाद्यन्वय इति व्यक्त्यवच्छेदकतया तस्यान्वयेऽमुख्यत्वम् । लक्षणयापि गोत्वावच्छिन्नैव व्यक्तिः क्रियान्वयिनी प्रतीयते न केवला व्यक्तिरिति गोत्वविशिष्टस्य लक्ष्यत्वे युगपद्वृत्तिद्वयविरोधः गोत्वेऽपि वा लक्षणा । अपि च जातिमात्रे न शक्तिर्न वा व्यक्तौ लक्षणा जातौ मुख्यप्रयोगाभावात् तयोस्तन्मूलकत्वात् प्रयोगो हि व्यवहारहेतुज्ञानर्थः । न च जातिमात्रनिर्विकल्पकाद्व्यक्तिमनादय केवलजातौ व्यवहारः तस्य विशिष्टज्ञानसाध्यत्वात् गां पश्य गौरस्तीत्यादावपि गोत्वविशिष्टस्यैव ज्ञानं व्यवहारश्र्च । तस्मादेकवित्तिवेद्यत्वनियमात् जातिवि#ाशिष्टं शक्यम् । यदि च तृतीयायाः करणैकत्व इव गो-गोत्वे शक्ये तदा गोत्वं गोव्यक्तिश्र्चेति धीः स्यात् न तु गौरिति वैशिष्ट¬ञ्च सम्बन्धो वा ज्ञातो घट इत्यत्रेव विशेषणताविशेषोऽर्थान्तरं वेत्यन्यदेतत् । जातिविशेषवदवयवसंयोगरूपाकृतिरपि पदशक्या गोपदात् जात्याकृतिसदृशाकृतौ लक्षणा पिष्टकसंयोगविशेषस्याशक्यत्वात् । जात्याकृति -व्यक्तीनां प्रत्येकमात्रपरत्वे लक्षणैव प्रत्येकस्य जात्याकृतिविशिष्टान्यत्वात् यथा गुरूणां कार्यशक्ताया लिङ्गो लोके कार्यत्वपरत्वे । अतएव व्यक्त्#ायकृति जातयस्तु पदार्थ इति पारमर्षसूत्रं

एकयैव शक्त्#ाय एकवित्तिवेद्यत्वसूचनाय पदार्थ इत्येकवचनम् । जातिशक्तिवाद: एवं पद्मं पङ्कजपदशक्यं ततो नियमत: पङ्कज निकतृपद्ममिति प्रतीते: अवयवानां तत्रासामर्थ्यात् रूढिं विना योगमात्रात् कुमुदे प्रयोगधीप्रसङ्गाच्च । ननु रूढावपि योगात् कुमुदे तौ कुतो न स्यातां रूढ¬ा प्रतिबन्धादिति प्राञ्च: ।

वयन्तु नियमतो रूढ¬ा स्मृतं पद्ममेव व्यक्तिवाचकडप्रत्ययेन पङ्कजनिकर्तृतयानुभाव्यते बाधकं विना व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमात् यथाग्नेयीति ढगन्तपदेन प्रकरणादिना सन्निहिता ढगभिहिता ऋग्व्यक्तिर्बोध्यते एवञ्च सर्वत्र पद्मानुभवसामग्रीवेति न कुमुदे धीर्न वा तदर्थप्रयोग: । नन्वेवं रूढिरेवास्तु तत एवोभयलाभात् किं योगरूढ¬ा न अवयवशक्ते: क्लृप्तत्वात् यौगिकार्थानुभवाच्च । यदि च रूढ¬र्थ एव यौगिकार्थ एव वानुभूयते तदा विवाद एव स्यात् अनुभवेनैव तद्विच्छेदात्।

अत्र मीमांसका: । न तावत् स्मृत्यर्थं शक्ति: पङ्कजपदप्रयोगविषये नियतपद्मानुभवजनितसंस्कारात् स्मृतेरेवोपपत्ते: स्मृतेस्तज्जन्यत्वनियमात् । नाप्यनुभवार्थं नियमत: स्मृतं पद्ममादाय व्यक्तिवचनन्यायेनावयवै: पङ्कजनिकर्तृ पद्ममित्यनुभवसम्भवात् स्मृतिश्च रूढ¬ा अन्यथा वेति न कश्चिद्विशेष: । शकिं्त विना नियमत: प्रयोग एव कुत इति चेत् न पूर्वप्रयोगमपेक्ष्य अवयवानुमुक्तन्यायेन पद्मानुभवजनकत्वनियमात् । पूर्वप्रयोगोऽपि तत्पूर्वप्रयोगमपेक्ष्येत्यनादितैव । अथानियतोद्बोधस्य संस्कारस्य शकिं्त विना नियतोद्बोधे हेत्वभावात् नियता स्मृतिरेव न स्यादिति चेत् न कदाचिच्छक्तितोऽपि उद्बोधाभावेन शक्यास्मरणात् शकिं्त विनापि नियमत: शक्तिस्मरणाच्च । उद्बोधकञ्च न नियतं सदृश-पदशक्ति-सम्बन्धिज्ञानानां प्रत्येकं व्यभिचारात् किन्तु यत्र स्मृतिस्तत्र तत्कालोत्पन्नमनियतमेवोद्बोधकं कल्प्यते फलबलात् कार्योन्नेयधर्माणां यथाकार्यमुन्नयनात् । न च पद्मत्ववत्तद्व्यापकादेरपि स्मृतिप्रसङ्ग: स्मृतिबलेनोद्बोधकल्पनमिति तत्र स्मृत्यभावेन तदुद्बोधाभावात् तस्माच्छकिं्त विना शक्तेरिव पद्मत्वस्य नियता स्मृति: । न चैवं गवादिपदेऽपि न शक्ति: स्यात् व्यवहारकालीनसंस्कारादेव गवादिस्मृतिसम्भवादिति वाच्यम् । न हि तत्र स्मृत्यर्थं शक्ति: किन्त्वनुभवार्थं पदादन्यतो गवादेरनुभवासम्भवादव्युत्पन्नस्य ततोऽनुभवासम्भवाच्च पद्मानुभवश्च योगादेवेति न समुदायो हेतुरन्यथासिद्धत्वात् अतो नानुभवबलात् समुदाये शक्तिकल्पनम् । नन्वेवं गवादिपदानां प्रमेयत्वे शक्तिरस्तु गवादिस्मृति: संस्कारादिति चेत् न गोव्यवहारेण स्वोपपादके गोज्ञाने पदस्य शक्तिकल्पनं न त्वनुपपादके प्रमेयत्वेन गोज्ञाने गोपदात् प्रमेयो गौरित्यननुभवाच्च । अथैवं संस्कारादेव तीरादिस्मृतिसम्भवे गौणलाक्षणिकोच्छेद: तीरद्यनुभवार्थं हि न तत्कल्पनं तदनुभवस्येतरपदादेव सिद्धे: तयोरननुभावकत्वात् तस्मान्नियता स्मृति: वत्तिसाध्येति तयो: कल्पनात् तथा च नियतपद्मस्मृत्यर्थं पङ्कजपदेऽपि वृत्तित्वेन शक्तिकल्पनमावश्यकं लक्षणाद्यभावादिति चेत् न गङ्गायामित्यादौ वृतिं्त विना तीरादेरपदार्थत्वे विभक्त्यर्थान्वयस्तत्र न स्यात् विभक्तीनां प्रकृत्यर्थगतस्वार्थान्वयबोधकत्वव्युत्पत्ते: । पद्मस्य तु पङ्कजवाक्यप्रतिपाद्यत्वेन पाचकादेरिव विभक्त्यर्थान्वयोपपत्ति: ।